KÂVYAMÂLÂ. 77.



# THE DELARÂMÂ-KATHÂSÂRA

OF

RÂJÂNAKA-BHATTA-ÂHLÂDAKA.

EDITED BY

MAHÂMAHOPÂDYÂYA PANDIT S'IVADATTA

Head Pandit and Superintendent, Sanskrit Department, Oriental College, Lahore,

AND

KÂSHÎNÂTH PÂNDURANG PARAB.



PRINTED AND PUBLISHED

BY

TUKÂRÂM JÂVAJÎ,

PROPRIETOR OF JAVAJI DADAJI'S 'NIRNAYA-SAGAR' PRESS.

BOMBAY.

1902.

*Price 6 Annas.*

काव्यमाला.



राजानकभट्टाह्लादकविरचितो

# देलरामाकथासारः ।



जयपुरमहाराजाश्रितमहामहोपाध्यायपण्डितदुर्गाप्रसाददारक-
केदारनाथकृपाङ्गीकृतशोधनकर्मणा महामहोपाध्याय-
पण्डितशिवदत्तशर्मणा, मुम्बापुरवासिपरबोपाह्व-
पाण्डुरङ्गात्मजकाशीनाथशर्मणा च
संशोधितः ।



स च

मुम्बय्यां निर्णयसागराख्ययन्त्रालये तदधिपतिना मुद्राक्षरैरङ्कयित्वा
प्राकाश्यं नीतः ।



१९०२





मूल्यं ६ आणकाः ।

# काव्यमाला।

## राजानकभट्टाह्लादकविरचितो
## देलरामाकथासारः।

### प्रथमः सर्गः।

नमस्कृतिर्यस्य परं सपर्यावर्याप्रसूनैर्न तु धूपदीपैः।
सदैव युष्मान्महिमा प्रभूतः पायात्खदैवस्य हितस्य तस्य ॥ १ ॥
एषा कथा मौसलशास्त्रदृष्टा भूयिष्ठसद्वाच्यमहाविशिष्टा।
मनोविनोदाय सतां जनानां गीर्वाणवाण्या क्रियते मयाद्य ॥ २ ॥
धनेशदिग्वारवधूसुवेशो देशो धरामण्डलहारिभूषा।
अस्ति प्रभूताद्भुतवस्तुलाभो नाम्ना हलाभो जगति प्रतीतः ॥ ३ ॥
यत्राङ्गनालिङ्गनमद्यपानक्रीडाप्रपञ्चेष्वभवद्धि चिन्ता।
कलिश्च नित्यं शुकशारिकासु मन्युः सपत्नीषु परस्परं च ॥ ४ ॥
कचग्रहस्तत्र मृगेक्षणासु नाशो बभूवाखिलदुर्नयेषु।
पातोऽपि लीलाधृतकन्दुकेषु घातः स्मरास्त्रैस्तरुणेषु यत्र ॥ ५ ॥
वराङ्गनानूपुरयुग्म एव यत्र प्रहृद्यं मुखरत्वमासीत्।
प्रतोदघातस्तुरगेषु चापध्वनिः सुधासूतिवसन्तशत्रौ ॥ ६ ॥
सामर्षनारीपरिसान्त्वनेषु वचोहरप्रेषणमेव चासीत्।
किं चापि नित्यं रतियुद्धकाले यूनां जनानामतिनिर्दयत्वम् ॥ ७ ॥
यत्राभवद्बाष्पजलप्रपातो बालाङ्गनानां नवसंगमेषु।
पीडाभवच्चासुरदच्छदेन वातूलचेष्टा मधुघूर्णितेषु ॥ ८ ॥
वैवर्ण्यमासीन्मदनातुरेषु कम्पोऽभिषेकावसरे वधूनाम्।
शङ्काभवत्तत्सुरताप्तिहेतोर्यस्मिन्पुरे चेतसि कामुकानाम् ॥ ९ ॥

वक्रोक्तिरासील्लटभाङ्गनासु नैष्ठुर्यमेतत्कुचमण्डलेषु ।
गर्हाप्यभूद्दुष्कृतकार्य एव नित्यं नराणां सुकृताश्रयाणाम् ॥ १० ॥
याच्ञाभवत्कामिजनस्य बालवराङ्गनालिङ्गनचुम्बनेषु ।
अधोगतिर्द्राग्जरतीस्तनेषु तदीयकेशेषु च मन्दभावः ॥ ११ ॥
कृशत्वमासील्ललनोदरेषु छेदोऽपि पुष्पावचये तरूणाम् ।
स्तम्भोऽप्यनङ्गप्रभवोऽभिकेषु रते नवोढाकरुणप्रलापः ॥ १२ ॥
मनस्विनीसान्त्वन एव चाटु तद्भ्रूषु कौटिल्यमभूत्सुहारि ।
व्यथा हि कामाहिततीक्ष्णबाणपातेन पान्थेषु रतोत्सुकेषु ॥ १३ ॥
धिग्वाद आसीत्परिचुम्बनेन यूनां नवोढानवसंगमेषु ।
कोपः क्षणं भर्तृषु मानिनीनां कृतापराधेष्वपरारतेन ॥ १४ ॥
तत्राभवद्विश्रुतकीर्तिपूरः संग्राममध्ये प्रवरः सुवीरः ।
साधुर्दयालुः सरलोऽतिधीरो राजा सुरत्राणमहम्मदाख्यः ॥ १५ ॥
तस्यातिभक्ता हितकार्यसक्ता नानाप्रतीता खलु मेरभक्ता ।
बभूव चेतोहरकान्तिरूपा भार्या निजान्तःपुरमुख्यभूता ॥ १६ ॥
तया समं चापरकामिनीभिः शृङ्गारकेलीर्विविधाः स कुर्वन् ।
बभार नो जातुचिदेव राज्यकार्यादिचिन्तां हृदि निर्विमर्षः ॥ १७ ॥
त्यक्तप्रजास्वविचार्यकार्ये तस्मिन्प्रयाते विपुले च काले ।
अदर्शनालापवशादमात्यवर्या विरक्ता निखिला बभूवुः ॥ १८ ॥
तस्यैकदा भूमिपतेः पुरस्तान्निरीक्षितुं वक्त्रमुपानिनाय ।
सुनिर्मलं दर्पणमुच्चशोभं बाह्याङ्गने नापित एक एव ॥ १९ ॥
आदर्शमध्ये स ददर्श राजा वक्त्रं जरापाण्डुररोमकूर्चम् ।
ततः प्रदध्यौ सहसा विमुच्य तद्दर्पणं जातघनानुतापः ॥ २० ॥
इयत्यहो भूरितरे च काले यातेऽपदानं न हि किंचिदेव ।
अकार्षमुच्चैर्नरनाथयोग्यं वयोऽनयं निष्फलतावशेषम् ॥ २१ ॥
ध्यात्वेति तां रात्रिमथातिवाह्य प्रातर्वितीर्य स्वपुरे निजाज्ञाम् ।
विनिर्ययौ सर्वसहाययोधभृत्यान्वितः सन्मृगयां विधातुम् ॥ २२ ॥

१. 'सुल्तान्' इति यावनीभाषायाम्.

गच्छन्स मार्गे विशिखावलीभिर्निपातयन्प्राणिगणान्धरित्र्याम् ।
पार्ष्णिप्रहारातिसकोपवाजिवेगेन दूरं कटकाज्जगाम ॥ २३ ॥
प्रधाव्यमानप्रवराश्ववेगादेकं महागह्वरमाससाद ।
तत्रालुलोके वरवर्णशोभामेकां मृगीं निर्भयगामिनीं सः ॥ २४ ॥

तामीक्ष्य तत्र नृपतिर्निजचापदण्डा-
द्धन्तुं निशातविशिखं निचकर्ष सद्यः ।
स व्याजहार हरिणी तु मनुष्यवाचा
त्वेकत्र रुद्धगतिरुद्गतविस्मयं तम् ॥ २५ ॥

राजंस्त्वदर्थमधुना हि समागताह-
माकृष्य बाणधनुषी इह संहरातः ।
किंचिद्वदामि सुमते क्षणमात्रमेव
यत्सावधानमनसा शृणु तत्समग्रम् ॥ २६ ॥

दुष्कर्मणार्जितविपत्तव भूपतेऽस्ति
या सर्वसद्विभवचित्तविनाशकर्त्री ।
एतर्हि तर्हि यदि वाञ्छसि तत्समेति
त्वां साधुनैव सहसा तु मदीयवाचा ॥ २७ ॥

किं तु त्वमिच्छसि तु चेत्परिणामकाले
तत्सांप्रतं भज मदीयगिरा स्वराज्यम् ।
ब्रूह्यद्य हृद्गतयथेष्टनिजाभिलाषं
त्वत्कारणात्त्रिदिवतोऽहमिहावतीर्णा ॥ २८ ॥

श्रुत्वेति तद्गिरमसौ पृथुजातदुःखो
दोलाधिरूढहृदयोऽथ समभ्यधात्ताम् ।
जायामुपैमि ननु यावदहं क्षणेन
पृष्ट्वाम्ब तावदिह मद्दयया भव त्वम् ॥ २९ ॥

उक्ते तथेति स तया स्वपुरं प्रतस्थे
मार्गेऽथ संमिलितसैन्यभटानुयातः ।

गच्छन्नवेन सहसा निजराजधानीं
संप्राप्य वासभवनं निजमाविवेश ॥ ३० ॥
आनीय तत्र निकटं किल मेरभक्ता
दूरीकृताखिलजनो विजनं समेत्य ।
तस्याः शशंस नृपतिः स मृगीवचस्त-
त्प्रोद्भिन्नबाष्पजलगद्गदभाषितेन ॥ ३१ ॥
आकर्ण्य तद्गिरमुवाच तु मेरभक्ता
सा तं विमृष्य विपुलोद्गतचित्तपीडा ।
राजन्नुपैति यदि दुर्गतिरद्य शक्ति-
र्देहेऽस्ति किंचिदपि सोढुमुरुप्रयत्नम् ॥ ३२ ॥
प्राप्तेऽथ दारुणतरे परिणामकाले
शान्ताखिलेन्द्रियनितान्तघनावसादे ।
कुर्वः किमेव वत कुत्र तदा प्रजा वः
सर्वे हसन्ति हि यदङ्गुलिदर्शनेन ॥ ३३ ॥
तद्गच्छ तूर्णमित एव मृगीसमीपं
तां ब्रूहि भूमिप पुरो विनयात्प्रणम्य ।
मातस्त्वदीयवचसा तु विपन्ममाद्य
स्फीतव्यथां तु न सहे परिणामकाले ॥ ३४ ॥
इति निजदयिताया वाचिकं तन्निशम्य
रजनिमवनिपालः स्वावरोधेऽतिवाह्य ।
उषसि तु मृगयाव्याजेन दूरीकृतस्व-
भृतकसचिवसैन्यः काननं तद्विवेश ॥ ३५ ॥

इति राजानकभट्टाह्लादकविरचिते देलरामाकथासारे मृगीदर्शनानन्तरं नृपगमनं नाम प्रथमः सर्गः ।

---

द्वितीयः सर्गः ।

अथ सपदि कुतोऽप्यागत्य दत्तावधानां
स नरपतिरपश्यत्तां मृगीं काननेऽत्र ।

द्रुततरमुपसृत्य प्राह नम्रोत्तमाङ्गो
भवतु जननि हन्त व्यापदद्यैव सा मे ॥ १ ॥
वच इदमथ तस्याकर्ण्य सद्यस्तिरोभू-
द्विपुलजनितचेतोविस्मया सा कुरङ्गी ।
त्रिचतुरपदयातस्यावनीशस्य वाजी
सपदि विधिनियोगाद्धन्त पञ्चत्वमाप ॥ २ ॥
निजकटकसमीपप्राप्तमात्रेऽथ पद्भ्यां
सपदि धरणिनाथे दुःखनम्रोत्तमाङ्गे ।
विपुलसुभटचक्राक्रान्तसर्वसृगव्या
विविधनिशितहेतिर्व्याधसेना जगाम ॥ ३ ॥
तदथ सकलसैन्यं हन्तुमभ्युद्यतां तां
सपदि शवरसेनां वीक्ष्य सर्वेऽप्यमात्याः ।
प्रवरहयगणानारुह्य तूर्णं तु जग्मु-
र्नगरमवनिपालं तं पदातिं विमुच्य ॥ ४ ॥
सकलविपुलसैन्ये विद्रुते ते पुलिन्दा
नरपतिमिममेकं वीक्ष्य दीनं पदातिम् ।
रुरुधुरथ समेत्य ज्यातले संनिपात्य
पृथुतरमुरुरज्वा दोर्युगं चापि बद्धा ॥ ५ ॥
परिहृतसकलालंकारभूयिष्ठरत्नं
धरणिपतिममन्दप्रत्तगात्रप्रहारम् ।
मुमुचुरथ कथंचिद्रज्जुबन्धं निवार्य
स्रवदपरिमितासृग्धारमेतं किराताः ॥ ६ ॥
तदतिघनरुषाथात्रान्तरे तत्सहायाः
सपदि ददुरमन्दानन्दितास्तत्स्वराज्यम् ।
द्रुततरमपरस्मै गोपुरे संनिधाय
प्रथितविपुलशौर्यान्त्रक्षिणो हेतिहस्तान् ॥ ७ ॥

इति निजपुरवार्तां तामजानन्स राजा
मुषितसकलभूषारत्नविच्छायशोभः ।
द्रुतपदमवरोधोत्कण्ठितोऽथ प्रतस्थे
शबरनिबिडबन्धायासितो राजधानीम् ॥ ८ ॥

कतिपयमथ वर्त्मातीत्य गच्छन्पुरस्ता-
न्नरपतिरथ पद्भ्यां मेरभक्तां ददर्श ।
मलिनवसनभाजं स्वप्रियां तां रुदन्तीं
विगतनिजपरिष्कारां भिया क्षिप्रयान्तीम् ॥ ९ ॥

अथ तां निरीक्ष्य च कथंचिदेव स प्रविभाव्य भूमिपतिरात्मवल्लभाम् ।
घनतप्तबाष्पजलगद्गदस्वरो निजशोककारणमपृच्छदन्तिके ॥ १० ॥
अयि वैशस(?)कारणं प्रिये वद केनासि नितान्तदुःखिता ।
विगतांशुकभूषणा कथं क्व च यासि द्रुतगामिनी पुरः ॥ ११ ॥
अथ सा विनतानना पतिं तमुदीक्ष्यावददश्रुगद्गदम् ।
सचिवैस्तव राज्यमर्पितं ह्यपरस्मै द्रुतमेत्य पत्तनम् ॥ १२ ॥
अहमप्यपनीतभूषणा नगराद्य पलाय्य चागता ।
त्वमपि क्व नु यासि सांप्रतं यदि दृष्टो रिपुभिर्निहन्यसे ॥ १३ ॥
तदितस्त्वरितं तु कंचनापरदेशं हि मया सह व्रज ।
अनुकूलविधिस्तथापि ते यदहं संघटिता पुरोऽधुना ॥ १४ ॥
इति तद्वचनेन दुःखितः प्रविहाय स्वपुरस्पृहं नृपः ।
परदेशमथोपचक्रमे सहसा गन्तुमरातिसाध्वसात् ॥ १५ ॥
अथ स भूमिपतिर्दयितासखो गहनभूधरवर्त्म परिभ्रमन् ।
कमपि देशमवाप्य चकार तद्वसतिमध्वघनश्रमखेदितः ॥ १६ ॥
न गुणवान्न च विक्रमलाञ्छनो न कवितापि च यत्र हि पूज्यते ।
परमसौ वत जीवति यः सदा नयति काष्ठचयं गहनान्तरात् ॥ १७ ॥
स नृपतिः सुकुमारशरीरवानपि दरिद्रतया विवशीकृतः ।
अधमवंशजनेऽपि विगर्हितामपि कुवृत्तिमजिग्रहदेव ताम् ॥ १८ ॥

प्रत्युषस्यपि निजप्रियार्पितापूप एव पथि भोजनाय सः ।
दूरवर्तिगहनान्तरं ययाविन्धनानयनहेतवे सदा ॥ १९ ॥
सायमेत्य विपिनात्पुरं प्रविश्यापणे तमपि काष्ठसंचयम् ।
वृत्तिमेष कुरुते स्म हन्त विक्रीतलब्धमितनिष्कसंख्यया ॥ २० ॥
एवमेव सुचिरं बभार विक्रीतकाष्ठनिचयेन जीविकाम् ।
प्रातरेव बत संततं व्रजन्सायमेत्य विपिनात्पुरं विशन् ॥ २१ ॥
द्वित्रियातपरिवत्सरावधौ काष्ठकष्टनिरतस्य तस्य सा ।
वल्लभा तु समजीजनत्सुतौ द्वौ क्रमेण शशिकान्तिसुन्दरौ ॥ २२ ॥
वृद्धिमापतुरथो क्रमेण तौ दारकौ रुचिरराजलक्षणौ ।
मातृपितृघनहर्षकारिणौ शैशवोचितमनोज्ञलीलया ॥ २३ ॥
........................................................................ ।
........................................................................ ॥ २४ ॥
........................................................................ ।
........................................................................ ॥ २५ ॥

[इति राजानकभट्टाह्लादकविरचिते देलरामाकथासारे .................... नाम
द्वितीयः सर्गः ।

---

तृतीयः सर्गः ।]

........................................................................ ।
........................................................................ ॥ १ ॥
........................................................................ ।
........................................................................ ॥ २ ॥
........................................................................ ।
........................................................................ ॥ ३ ॥
........................................................................ ।
........................................................................ ॥ ४ ॥
........................................................................ ।
........................................................................ ॥ ५ ॥

.......................................................... ।
.......................................................... ॥ ६ ॥
.......................................................... ।
.......................................................... ॥ ७ ॥
.......................................................... ।
.......................................................... ॥ ८ ॥
.......................................................... ।
.......................................................... ॥ ९ ॥
.......................................................... ।
.......................................................... ॥ १० ॥
.......................................................... ।
.......................................................... ॥ ११ ॥
.......................................................... ।
.......................................................... ॥ १२ ॥
..............................................ह मातः ।
तुभ्यमद्य तु ददानि समग्रांस्तान्गृहाण सहसैव हि मत्तः ॥ १३ ॥
द्रव्यमन्यदधिकं ह्यत एतन्नैव रत्नमिह चार्हति लब्धुम् ।
नेयता यदि ददासि भवत्या नीयतामपरधाम तदद्य ॥ १४ ॥
सा निशम्य गिरमित्थममन्दानन्दितस्य वणिजस्तु विमृश्य ।
एवमस्त्विति जगाद पुरस्तात्संनिधाय धरणीपतिपत्नी ॥ १५ ॥
सोऽथ सार्थपतिरुद्धतहर्षस्तूर्णमेव विगणय्य समग्रम् ।
तत्समर्प्य च शतत्रयमस्यै भासुरं मणिमजिघ्रहदण्डम् ॥ १६ ॥
तां ततः प्रमुदितः स बभाषे सन्ति चान्यमणयोऽस्य समानाः ।
तर्हि यद्यपि तवाद्य समीपं तान्समानय जनन्यखिलांस्त्वम् ॥ १७ ॥
दीयते खलु मयास्य समानं वित्तमम्ब विगणय्य समग्रम् ।
तन्निशम्य मुदिता नृपपत्नी सा तथेति तमथो निजगाद ॥ १८ ॥

साप्यशेषमथ तत्परिगृह्य स्फीतहर्षभरपूरितचित्ता ।
आययौ निजगृहं नृपपत्नी व्यापदन्तसमयं प्रविदन्ती ॥ १९ ॥
गूढमेव तदुपार्जितवित्तं सा निधाय विजने नृपजाया ।
कस्यचिन्न समभाषत नैवादर्शयच्च कृतसंवृतिरुच्चैः ॥ २० ॥
सा परेऽह्नि च समेत्य विहङ्गीपञ्जरान्तिकमुपात्तघनास्था ।
अद्वितीयमपरं च तदण्डं पश्यति स्म गुरुदीप्ति सुदीप्तम् ॥ २१ ॥
तं मणिं च परिगृह्य सहर्षाकृष्य मञ्जुलसुपञ्जरगर्भात् ।
तस्य नैगमवरस्य समीपं सा पणान्तरमथैत्य जगाम ॥ २२ ॥
तत्र तस्य तु यथा [1]प्रथमस्मिन्वासरे ननु तथैव तदह्नि ।
अण्डमेकमपरं च ततो विक्रीय वित्तमनयन्निजधाम ॥ २३ ॥
अथ सा तृतीयदिवसेऽपि तथा परिलब्धरत्नकृतविक्रयतः ।
समुपात्तवित्तनिचयेन तदा बहुशो जहर्ष सुखमाप भृशम् ॥ २४ ॥
इति संततासगुरुरत्नचया विहगीप्रसादवशतो ननु सा ।
सह तेन सार्थपतिना व्यधित व्यवहारमत्र न परेण समम् ॥ २५ ॥
अथ संभृतप्रवरवित्तचया स्वपतिं कदाचिदवदद्दयया ।
सततं कुटुम्बभरणाय विभो नितरां प्रताम्यसि कुवृत्तिवशात् ॥ २६ ॥
निजशिल्पकर्मवशतो द्रविणं मम विद्यतेऽद्य ननु किंचिदिह ।
परिगृह्यते तदत एव मया सदनप्रयासकरदासजनः ॥ २७ ॥
ननु सर्वथा स्वपतिरेव सदा परिरक्ष्यते वरकुलाङ्गनया ।
तदितः परं भव सुखी सुचिरं त्यज काष्ठकष्टकृतवृत्तिमिमाम् ॥ २८ ॥
करवै कुटुम्बभरणं तु कथंचिदपि स्वयं विविधयत्नशतैः ।
न सहे त्वदीयवपुषः सततं पृथुखेदमुत्तमगुणस्य विभो ॥ २९ ॥
इति भारतीं प्रियहितां नृपतिः स निशम्य तामथ निजां दयिताम् ।
प्रशशंस जातघनहर्षभरो विरराम चेन्धनचयाहरणात् ॥ ३० ॥

---

१. 'प्रथमे च' इति पाठः कल्पनीयः, प्रथमशब्दस्य सर्वनामसंज्ञकत्वाभावात्स्मिन्नादेशाप्रवृत्तेः.

स ततः प्रभृत्यभवदत्र सुखी सुकुलीनसाधुविबुधैर्गुणिभिः।
सह धर्मशासनकथाविबुधा धरणीपतिर्विरचयन्सततम् ॥ ३१ ॥
द्विहगीप्रसादपरिलब्धमहाद्रविणेन सा विपुलदासजनान्।
समजिग्रहन्नरपतेर्दयिता निजमन्दिरे विविधकर्मकृते ॥ ३२ ॥
अपि केवलं स्वयमसौ नितरां सह तेन सार्थपतिना सततम्।
मणिभिर्धनैर्विदधती प्रवरैर्व्यवहारमास्त सुखितात्र पुरे ॥ ३३ ॥
सततं तदीयसदनागमना परिजातसंस्तववशेन तु सा।
गतयन्त्रणा विविधनर्महृता वणिजा समं रतिमचीकमत ॥ ३४ ॥
स्वगृहात्सदैव घनभोज्यसुरादिकमेतदीयसदनं सधनम्।
उपनीय तेन वणिजैव समं ह्यवसत्पपौ भृशमरंस्त च सा ॥ ३५ ॥
प्रतिवासरं प्रचुररागहृता समभूत्तथैव किल सार्थपतौ।
स्वधनेन रुच्यतममस्य कृते स्वयमेव भोज्यमपचत्तु यथा ॥ ३६ ॥
तं भर्तारमपि स्वकीयतनयौ तौ राजचिह्नाङ्कितौ
सर्वस्वं मनुते स नैव च तदा सा मेरभक्ता तथा।
रागग्रस्तमतिर्यथैव वणिजं तं दुष्कुलीनं शठं
स्त्रीणां दुश्चरितं न जातुचिदहो पापावहं शाम्यति ॥ ३७ ॥

इति देलरामाकथासारे वित्तप्राप्त्यनन्तरं वणिजा सह राजपत्नीसंगमो नाम तृतीयः सर्गः।

---

चतुर्थः सर्गः।

ज्ञानतीक्ष्णधिषणा बभूव तत्कालमस्य वणिजः स्वमन्दिरे।
वृद्धयोषिदपि काचिदुच्चकैस्तत्कृपापरमना हि शाकिनी ॥ १ ॥
भोज्यभाण्डनिचयं सदा समादाय तत्र जरती विलोक्य सा।
तां गतागतकरीं दिवानिशं सार्थवाहसदने विसिस्मिये ॥ २ ॥
एकदा समुपसृत्य साब्रवीत्सार्थवाहमथ वृद्धकामिनी।
पुत्र सेयमिह संततं किमागच्छति प्रचुरभाण्डधारिणी ॥ ३ ॥
एतदागमनहेतुमत्र मे ब्रूहि पुत्र मम तथ्यमेव तत्।
नैव गोपयितुमर्हसि ध्रुवं त्वं मया तनयवद्धि मन्यसे ॥ ४ ॥

हृद्गतं वद ममाधुना भृशं कौतुकं मम किलात्र वर्तते ।
वेद्म्यहं सकलबुद्धिचेष्टितं तद्ब्रवीमि हितकाम्यया तव ॥ ५ ॥
सोऽभ्यधादिति निशम्य भारतीं वृद्धयोषितमिमामथो वणिक् ।
मातरत्र तव किं वदाम्यहं स्त्रीमनो हि तरलं प्लवंगवत् ॥ ६ ॥
आययाविह निजात्पदाच्च्युतः कोऽपि भूमिपतिरम्बिके पुरा ।
सेयमस्य दयिता मदन्तिके जातुचिद्व्यधित रत्नविक्रयम् ॥ ७ ॥
तत्ततः प्रभृति जातसंस्तवा मां सदैव भजतेऽनुरागिणी ।
नैव मुञ्चति कदाचिदप्यसौ स्नेहबन्धमनिवारितं मयि ॥ ८ ॥
तत्स्वकीयधनसंचयाद्व्ययं नित्यमेव कुरुते निरन्तरम् ।
मामकं न हि तु किंचिदेव गृह्णाति वित्तमपि कल्पितार्थना ॥ ९ ॥
भारतीमिति निशम्य सा ततस्तं जगाद जरती वणिक्पतिम् ।
पुत्र चेदतिघनानुरागिणी सा भवत्यपि भवत्यनारतम् ॥ १० ॥
तत्स्वगेहविहगीं निहत्य चेत्त्वामुपानयति भोक्तुमद्य सा ।
मन्यते तदतिविस्मयान्मया प्रेम पूर्णमतिमात्रशोभनम् ॥ ११ ॥
सोऽब्रवीदिति निशम्य तामथो मातरत्र बत को हि संशयः ।
यत्र दुर्लभसुपीनमेप मां शासनं तु कृपयानयात्र किम् ॥ १२ ॥
साप्यभाषत विहस्य शाकिनी तत्त्वमत्र न हि वेत्सि नन्दन ।
विस्मयप्रदमिहाद्य विद्यते कारणं न वितथं मयोच्यते ॥ १३ ॥
तन्निशम्य गुरुजातकौतुकः सोऽत्र सार्थपतिरुच्चकैस्ततः ।
पक्षिणीपिशितभक्षणोद्यतस्तत्प्रतीक्षणरतोऽभवत्तदा ॥ १४ ॥
सा जगाम नरनाथवल्लभा सार्थवाहनिकटं तदन्तरे ।
सोत्सुका प्रचुरहर्पमानसा भोज्यपानभृतभाण्डधारिणी ॥ १५ ॥
तां विलोक्य स पराङ्मुखोऽभवन्नैव किंचिदपि चावदत्ततः ।
संजहार च तदाननोत्सुकां दृष्टिमुच्चतरमन्युमानभूत् ॥ १६ ॥
सा तथाविधमवेक्ष्य तं प्रियं जारमाह समुपेत्य तत्क्षणम् ।
भूतले विविधभोज्यसंभृतस्थापिताभिनवभाण्डसंचया ॥ १७ ॥

त्वत्कृतेऽहमविमृष्य तत्क्षणं तत्करोमि तदपि ब्रवीषि यत् ।
नापराधमपि वेद्मि चात्मनः स्तोकमप्यथ हि येन खिद्यसे ॥ १८ ॥
तावकीनवचनामृतं मया केवलं दयित काङ्क्ष्यते सदा ।
किं पराङ्मुखमवस्थितो भवान्मन्दभाग्यवशतो मम प्रभो ॥ १९ ॥
चेतसि किंचिदपराधमद्य मे यद्यहो तदपि किं प्रतीक्ष्यसे ।
रोचितं यदिह तत्कुरु प्रभुस्त्वं ममाहमपि चेटिका तव ॥ २० ॥
नाथ किंचिदपि नोऽभवत्समाराधनाय मम चास्ति दुष्करम् ।
तत्प्रसीद वद सांप्रत द्रुतं हृद्गतं यदिह तन्महामते ॥ २१ ॥
अर्थ्यतां च भवता यदीप्सितं विद्यते मम यदेव दुर्लभम् ।
जीवितं यदनुरागतो मया दीयते परधने तु का कथा ॥ २२ ॥

इत्यस्या गिरमुपकर्ण्य सार्थवाहः प्रत्याहाथ सपदि मन्दमन्दवाचा ।
किं ब्रूमो यदपि नितान्तनीरसं तन्मांसं मे निकटमिहानयस्यजस्रम् ॥२३॥
रुन्ध्यो यत्पिशितमतीव पुंश्चलि त्वं तां गेहे स्थगयसि सर्वदा विहंगीम् ।
पक्त्वा तत्सविधमिहानयाद्य तूर्णं प्रीतिस्ते यदि मयि विद्यते नितान्तम् ॥२४॥
श्रुत्वैतत्तमथ जगाद **मेरभक्ता** व्यक्तीभूतनिजविहंगिका सदुःखा ।
क्रीडार्थं पृथुककृते स्थिता हि सा मे किं तस्याः कृशतरमांसचर्वणेन ॥२५॥
अन्यान्कांश्चिदपि सुपीवरान्विहंगान्भूरींस्त्वत्सविधमिहानयामि तूर्णम् ।
मेषादीनपि विविधान्पृथूनथो वा तां सूक्ष्माकृतिविहगीं त्यजस्व नाथ ॥२६॥
उक्तोऽप्येवमथ स भूरिशो यदासौ निर्बन्धान्न तु विचचाल सार्थवाहः ।
तां हन्तुं सपदि तदैव सा विहंगीमङ्गीकारमकृत तस्य चित्ततुष्ट्यै ॥२७॥
प्रातस्तामथ विहगीं निहत्य गूढं सा क्रूरा विगतघृणा हि **मेरभक्ता** ।
जाराराधनवशतो निरस्तदुःखा तन्मांसं सपदि पपाच सूक्ष्मभाण्डे ॥ २८ ॥
पक्त्वा तद्रहसि निधाय चैकदासीं रक्षायै निजसदने प्रयुज्य तूर्णम् ।
तं द्रष्टुं वणिजमगच्छदस्य तच्च व्याख्यातुं त्ववसरमाप्तुमात्मभोगे ॥ २९ ॥
तत्काले नृपतनयौ विधाय लीलामन्योन्यं विपुलतरोद्धतश्रमार्तौ ।
क्षुत्क्षामौ किमपि तु भोजनं विधातुं तत्तूर्णं सदनमथाविवेशतुस्तौ ॥ ३० ॥

एकान्तौ नृपतनयौ तु तत्र दृष्ट्वा दासीमेत्य सविधमूचतुस्तदानीम् ।
भद्रे त्वं वद जननी क चागमत्सा कावाभ्यामशनमिहाधुना ददाति॥३१॥
दासी सा तदिति निशम्य तौ बभाषे क्वापीतो द्रुगिति गताभवत्स्वमाता ।
रक्षार्थं निजसदने तथा प्रत्युक्ता किं चाहं बत करवै विना तदाज्ञाम्॥३२॥
श्रुत्वैतद्गिरमवधूय चेटिकायाः क्षुत्क्रान्तौ स्वयमथ किंचिदेव भोज्यम् ।
अन्विष्य क्षणमपि नापतुर्यदा तौ तद्भाण्डं रहसि तदात्र पश्यतः स्म ॥३३॥
आनीय द्रुतमथ तत्सुगन्धिनानाद्रव्येण प्रसभमनोहरं समीपम् ।
तत्रान्तः सपदि निवार्य तत्पिधानं तां पक्त्वा बत विहगीं ददर्शतुस्तौ॥३४॥
दृष्ट्वा तद्विपुलबुभुक्षयाग्रजोऽसौ तन्मध्यात्सपदि शिरो निगीर्य सास्थि ।
पक्षिण्याः स्वयमघसच्च तत्कनीयांस्तद्वक्षोऽपि च स तथैव तूर्णमेव ॥३५॥

तन्मांसावयवद्वयं च युगपद्भुक्त्वा बुभुक्षावशा-
　त्तद्भाण्डं च तथैव मातृभयतः कृत्वा पिधानाचितम् ।
तत्रैवापि निधाय किं तु विजने निर्याय वेश्मान्तरा-
　त्क्रीडां कर्तुमथो प्रजग्मतुरिमौ भूपालपुत्रौ बहिः ॥ ३६ ॥

इति देलरामाकथासारे विहगीव्यापादनानन्तरं राजपुत्रकृततदङ्गद्वयकवलीकारो नाम चतुर्थः सर्गः ।

---

पञ्चमः सर्गः ।

तत्काले निजसदनं समेत्य तूर्णं पप्रच्छ क्षितिपतिवल्लभा स्वदासीम् ।
भद्रे कोऽत्र हि मदसंनिधौ प्रविष्टः श्रुत्वैतद्गिरमिति चेटिकाचचक्षे ॥ १ ॥
त्वं याता जननि यतः प्रभृत्यपीतः केनापि द्रुततरमेव कारणेन ।
आरभ्य ध्रुवमिह नस्ततस्तु गेहे नान्यः कश्चिदपि समागतो न दृष्टः ॥ २ ॥
किं तु क्षुत्क्रमविवशौ त्वदीयपुत्रौ मामेत्याहतुरुपकण्ठमम्बिकेऽद्य ।
भद्रे किं भवति हि नौ कृते स्वभोज्यं माता सा क च विगता गृहं विहाय॥३॥
श्रुत्वैतत्त्वहमवदं नृपात्मजौ तौ माता वां क च विगतेति नैव वेद्मि ।
रक्षार्थं निजसदने तया प्रयुक्ता तस्याः शासनमपहाय किं करोमि ॥ ४ ॥
उक्तौ ताविति च मया स्वयं प्रविश्य क्षिप्रं मन्दिरमथ भोजनं प्रलब्धुम् ।
खट्वायास्तलमपिधानसूक्ष्मभाण्डात्किंचिन्मांसशकलयुग्ममाशतुश्च ॥ ५ ॥

श्रुत्वैतत्सपदि ससंभ्रमं सदुःखं तद्भाण्डं स्वयमुपसृत्य मेरभक्ता ।
शीर्षेणापि च ननु वक्षसा विहीनं हर्षोन्मुक्तनिजमना ददर्श तत्र ॥ ६ ॥

अन्यथातितशकुन्तकर्षितोरःशिरःसु परिपूरिताङ्ककम् ।
तच्चकार सहसा तथैव सा द्रव्यगौरवनितान्तसौरभम् ॥ ७ ॥

गूढमेव ननु तत्ततः समादाय भाण्डमतिमात्रहर्षिता ।
रम्यकल्पितसुवेशशोभिता सार्थवाहनिकटं जगाम सा ॥ ८ ॥

आगतामथ स भाण्डधारिणीं तां निरीक्ष्य गुरुजातसंपदः ।
गाढरामपरिरम्भचुम्बनाद्यैरतोषयदतीव भूरिशः ॥ ९ ॥

शाकिनी गदितशिक्षयादरात्तच्चखाद सकलं स्वयं पलम् ।
अन्यमांसमपि सा जघास तच्चित्तरञ्जनकृतेऽनुरागिणि ॥ १० ॥

सोऽथ सार्थपतिरेतया समं राजयोग्यवरभोगरूपया ।
उच्चकैर्विविधचेष्टितं व्यधात्स्वात्मगुप्तसदने यथेप्सितम् ॥ ११ ॥

क्षणं सघनसंमर्दं ललितकुन्तलाकर्षणं
क्षणं च परिचुम्बनं सुभगतत्कपोलद्वये ।
क्षणं मधुरमद्यपानमपि जानुयुग्मं पुरो
निधाय च ससंभ्रमं मणिमये महाभाजने ॥ १२ ॥

मुहुश्च परिरम्भसंभवसुखामृतास्वादनं
मुहुर्मदनविभ्रमं············मुहुर्नर्म च ।
मुहुः स्वगुणकीर्तनं मुहुरपि प्रियाः सत्कथा
मुहुश्च कमनीयचेष्टितमलं रतिव्यत्ययम् ॥ १३ ॥

वणिक्स इति भूरिशो ह्यनुभवन्समं चैतया
निनाय रजनीं मुहूर्त····वलं सुखं हर्षवान् ।
ततः समुदिते रवौ प्रतिमुमोच तां वल्लभां
स्वकीयसदनं प्रति प्रचुरभोगसंतर्पितः ॥ १४ ॥ (तिलकम्)

ततः समुपसृत्य तां स वणिगाह हर्षान्वितो
गृहस्थजरतीस्त्रियं कृतनमस्कृतिस्तत्पुरः ।

यदेव भवती जगाद जननि प्रियं मे हितं
तदद्य विहितं मया सपदि सावहेलं निशि ॥ १५ ॥
निशम्य वणिजो वचस्तदिति सा विमृश्य क्षणं
जगाद जरती विहस्य वणिजं गुरुज्ञानवित् ।
यदत्र तनया भवद्भरतरं हि सारं परं
न जग्धमपि तत्त्वया प्रचुरकाम्यसिद्धिप्रदम् ॥ १६ ॥
स चावददथो किमन्यदधिकं ब्रवीषि द्रुतं
यतो जननि कथ्यतां हृदि विमृष्य मे निर्णयात् ।
मयैव ननु खादितं सकलमेव चैकाकिना
तयार्पितममन्दरागवशतः सगात्रं पलम् ॥ १७ ॥
उवाच जरती पुरः शृणु वदामि सत्यं तव
भृशं तनयसारभूतमभवद्विहंग्याः शिरः ।
उरश्च यदहो तदेव खलु तत्सुतौ जक्षतु-
स्त्वया यदपि भुक्तमद्य च तदन्यमांसोपमम् ॥ १८ ॥
स्वपुत्रयुगखादितावयवहीनभाण्डं ततो
विलोक्य सहसा भृशं तनयभूरिदुःखाकुला ।
त्वदीयभयकारणादपि कुतश्चिदानीय सा
निहत्य शकुनिं परं किल तदङ्गतोऽपूपुरत् ॥ १९ ॥
स सार्थपतिराह तामथ विचिन्तयन्स्वात्मनः
कुभाग्यपरिजृम्भितं प्रसभविप्रतीसारवान् ।
क एतदशनेन संभवति मातरुच्चैर्गुण-
प्रभावगरिमा च को यदनिशं प्रशंसस्यलम् ॥ २० ॥
तमाह जरती ततस्तनय यो हि भुङ्क्ते शिर-
स्तदीयसुत यत्र यत्र स हि तिष्ठति प्राज्यधीः ।
अवाप्स्यति स तत्र तत्र सहसैव राज्यं मह-
त्सुखं च कमनीयमेव नितरां यथेष्टं शुभम् ॥ २१ ॥

स्वहारवरमध्यशोभितसुरत्नधाम्नि ध्रुवं
शतत्रयमवाप्य संततमुदारदीनारतः ।
सुखं भजति मङ्गलं श्रयति सोऽपि सद्भाग्यवा-
नुरश्च सुतयस्तदीयमपि चात्ति कश्चिन्नरः ॥ २२ ॥

भवान्पलमखादयिष्यदपि भूरिसिद्धिप्रदं
तदव्ययदितत्प्रभाववशतोऽभविष्यत्सुत ।
महाधरणिवल्लभः प्रवरभागधेयावहो
निरन्तरधनाढ्यकोशसुखसंस्थिताम्भोधिजः ॥ २३ ॥

तदेव विहगीपलं खलु यथा त्वया खाद्यते
तथा कुरु यथा तथा तनय चैवमेव प्रियम् ।
त्वदीयहितकाम्यया निजगदे मया संततं
तदभ्यधिकरुच्यमांसमिह विद्यते तेन किम् ॥ २४ ॥

अपृच्छदथ तामसौ विपुलजातकौतूहलो
विधातृपरिवञ्चितं स्वमशुभं विनिन्दन्मुहुः ।
उपाय इह कथ्यतां जननि मे त्वया सांप्रतं
किमत्र तु विधीयते वरमते क्षणं चिन्तय ॥ २५ ॥

प्राज्यं प्राज्यं जननि यदि तन्मेऽभविष्यच्च वह्नी
वित्तप्राप्तिः प्रतिदिनमथो तावकीनप्रसादात् ।
यद्यत्किंचित्सपदि भवती स्वात्मबुद्ध्याकरिष्य-
त्तत्को वा सदसदपि वालङ्घयिष्यद्वराकः ॥ २६ ॥

आकर्ण्यासौ तदिति जरती सार्थवाहं बभाषे
शीर्षे वक्षस्यपि च तु विहंग्यास्तु तस्या यदस्थि ।
काम्यं रत्नं तनय रुचिरं वाञ्छिता मेयसिद्धि-
प्राप्तिप्राज्ञानुपमविभवं माननीयं तदस्ति ॥ २७ ॥

नैतत्केनापि खलु सुमते जीर्यते नाम भुक्त्वा
तस्मात्तस्यास्तनययुगवक्षोन्तरे विद्यतेऽद्य ।

तत्तत्प्रेम्णा यदि निजसुतौ साहनिष्यन्निगूढं
किं चैतद्व्यस्थियुगलमतोऽप्रापयिष्यद्भवांस्तत् ॥ २८ ॥
अद्य त्वं तनय तथा कुरुष्व तूर्णं सद्यो यद्रुचिरतरास्थिनी निगीर्य ।
प्राप्नोषि प्रवरमते धराधिपत्यं वित्तं च प्रतिदिनमुच्चकैर्यथैव ॥ २९ ॥
अन्यत्किंचित्तदपि न हि तद्विद्यते नात्र मन्त्रः
पुत्रैतच्चेत्सपदि बत संपत्स्यते ते स्वभाग्यैः ।
किं भूयिष्ठैः सततविफलायासदैः कार्यभारै-
स्तस्मादत्रैव शुभदमहाकर्मणि प्रेरयैताम् ॥ ३० ॥
उक्त्वा चैवं सपदि विरतायां तु तस्यां जरत्यां
स्फीतोत्कण्ठातिविविधमहाभोज्यसंपूर्णभाण्डा ।
रन्तुं तस्यान्तिकमुरुमुदा सा ययौ मेरभक्ता
सालंकारा रुचिरतरसंकल्पिता कल्पशोभा ॥ ३१ ॥
तामायान्तीं सपदि स वणिग्वीक्ष्य सोत्कण्ठचित्तां
चेटीस्कन्धार्पितवरमहाभोज्यभाण्डां सहर्षाम् ।
कोपाटोपं विगतहसितं धारितादत्र मौनं
त्यक्तालापं परिहृतगुणं सावमानं चकार ॥ ३२ ॥
आलोक्यैवंविधमुपगता कामिनं तं प्रदध्यौ
धिङ्मां भाग्यैः सततपरिहीनामुदारावसादाम् ।
दीनाराणां त्रितयशतदां प्रत्यहं तां विहंगीं
हत्वा यः सेवित इह बत प्रत्युतासौ समन्युः ॥ ३३ ॥
ध्यात्वैवं तं सविनयमसावाचचक्षे सदुःखा
केनैवं त्वं प्रकुपित इवालोक्यसे प्राणनाथ ।
जानाम्यत्र प्रियतम विचार्यापि हेतुं न किंचि-
त्तन्मा मिथ्या मयि घनरुषा वक्रवक्त्रं कुरुष्व ॥ ३४ ॥
जानीषे किंचिदपि खलु चेद्दोषलेशं मम त्वं
यद्ब्रूयास्त्वं किमिह तु करोष्युच्चकैश्चावहित्थाम् ।

मह्यं याज्ञा यदिह भवता दीयते सादरेण
क्षिप्रं सा चेद्यदि न विहिता तद्रुषं धत्स्व चित्ते ॥ ३५ ॥
दैवान्निष्कारणमपि विभो चेत्प्रकुप्यस्यभीक्ष्णं
तन्नो युक्तं सदयमनसां त्वादृशानां जनानाम् ।
भूयोभिर्वा किमिह वचनैः किं प्रलापैश्च मिथ्या
मां पादान्ते ध्रुवमपरथा विद्धि संत्यक्तजीवाम् ॥ ३६ ॥
उक्त्वैवं तच्चरणयुगले संनिपत्य प्रभूत-
प्राप्तस्वान्तस्मरशरभरासारसंभूतपीडा ।
तत्कालं सा करुणकरुणं गाढरागगृहीता
वक्षोजोर्ध्वच्युतनयनबाष्पाम्बुधारा रुरोद ॥ ३७ ॥
त्यक्त्वा मौनं सपदि कुपितः स्वार्थलोभगृहीतो
दूरं कृत्वा विधिमपि हठात्सिद्धिमिच्छन्वराकः ।
तां रागान्धामथ स शनकैराचचक्षे कथंचि-
त्तद्वक्त्रालोकननिरतदृष्टिं निजां संनियम्य ॥ ३८ ॥
त्वं मे भर्ता त्वमसि दयितः प्राणनाथस्त्वमेव
त्वं सर्वस्वं मम यदपि चास्ति प्रभो तत्त्वदीयम् ।
वाङ्मात्रेण प्रतिदिनमहो भाषसे चैवमद्धा
प्रत्यक्षं तन्न हि तु फलतो लभ्यते किंचिदेव ॥ ३९ ॥
इत्थं तद्वचनेन जातकुतुका सोद्बाष्पनेत्रा ततः
पप्रच्छाङ्घ्रितले निपत्य सहसा साभ्यर्थनं सादरम् ।
किं गूढं भवता विनाप्यकरवं कार्यं ममेहोच्यतां
ज्ञात्वा तत्सदसद्विनिर्णयमहो यद्रोचते तत्कुरु ॥ ४० ॥

इति देलरामाकथासारे सरोपकामुकानुनयो नाम पञ्चमः सर्गः ।

---

षष्ठः सर्गः ।

श्रुत्वा तत्स वणिगुवाच दुर्मतिस्तां नैवासीन्मम विहगीपलेऽतिलिप्सा ।
वक्षःशीर्षमपि तदीयमेव भोक्तुं वाञ्छाभूत्किमपरमांसचर्वणेन ॥ १ ॥

तद्वस्तुद्वयमपि सर्वमेव सद्यः स्नेहेन स्वसुतयुगाय पूर्वमद्धा ।
दत्त्वा मन्निकटमथागतासि भाण्डं संपूर्णं परखगगात्रतो गृहीत्वा ॥ २ ॥
साकर्ण्योक्तिमिति तमेव मन्यमाना विज्ञानप्रवरमहाधियं तु कंचित् ।
प्रत्याह प्रिय मदसंनिधौ तु ताभ्यां जग्धं तद्वद किमहं करोमि तत्र॥ ३ ॥
सोऽवादीद्यदि दयितेऽधुना ध्रुवं मां जानीषे प्रियतममेव कामुकाग्र्यम् ।
तत्तूर्णं निजतनयौ यथा तथा तौ हन्यास्त्वं युगपदलं निगूढमेव ॥ ४ ॥
उत्पाट्य हृदयमथो तयोः स्वयं तद्वक्षोन्तर्गतविहगीवरास्थियुग्मम् ।
आकृष्य द्रुतमधुना प्रयच्छ मह्यं मन्युर्मे न च परथा प्रशाम्यति द्राक् ॥५॥

विद्युन्निपातमिव मन्दिरवह्निदाहं
खड्गप्रहारमिव सागरमज्जनं वा ।
जारानुरोधवशतः शिशुमारणं हा
साङ्गीचकार धिगहो वनितानुरागम् ॥ ६ ॥

श्रुत्वेत्यथाभ्युपगमं नितरां प्रतुष्टो
दुष्टो वणिक्सपदि तां दृढमालिलिङ्ग ।
गेहे निजे द्रविणभूरितरव्ययेन
प्रोच्चैस्तदा वरमहोत्सवमादिदेश ॥ ७ ॥

आनीय सोऽन्तिकमहो विविधं प्रभूतं
पक्वान्नहारिमदिरादियथेष्टभोज्यम् ।
आरोप्य तां निविडरागहृतां निजाङ्के
प्रीतां परामनुबभूव रतादिभोगैः ॥ ८ ॥

आलिङ्ग्य तां निविडमेव नरेन्द्रपत्नीं
भोगान्सुदुर्लभतरांश्च पुरो निरीक्ष्य ।
आखण्डलं च मदनं धनदं तदानी-
मात्मानमेव स विवेद वणिक्प्रमोदात् ॥ ९ ॥

कृत्वा क्षणं तदधरामृतपानलीलां
स प्रोद्धतप्रमदजातनितान्तदर्पः ।

पीयूषलाभमथिताम्बुनिधिप्रभूत-
संभूतखेदविवशांस्त्रिदशान्निनिन्द ॥ १० ॥
तन्नेत्रवक्त्रकरकण्ठकुचोदराति-
शोभां निरीक्ष्य रुचिरां स चिरं विचार्य ।
इन्दीवरेन्दुकमलाच्युतशङ्खहेम-
कुम्भाशनिप्रविहितानुकृतिं न सेहे ॥ ११ ॥
एवं तदा विरचयन्स्वमनोविनोदं
साकं तया विविधनर्मकथाश्च कुर्वन् ।
संसेवयन्सुरतसौख्यमलं यथेच्छं
तामत्यवाहयदसौ क्षणवत्त्रियामाम् ॥ १२ ॥
उत्थाय साथ वणिजः शयनाद्गतायां
रात्रौ स्वपुत्रयुगमारणबद्धकक्ष्या ।
कर्तुं ह्युपायमतिदुःखकरं प्रभूत-
पापावहं च निजमन्दिरमाजगाम ॥ १३ ॥
ध्यात्वा चिरं निबिडरागविनष्टबुद्धिः
सा दुष्टकामुकसमागमतुष्टचित्ता ।
अन्विष्य कंचिदपि दासमतीव पापं
जग्राह वित्तनिचयेन दयाविहीनम् ॥ १४ ॥
स्थूलाकृतिं शमनहुंकृतितुल्यवाचं
कृष्णाननं दुरितकर्मनिरस्तशङ्कम् ।
आनीय तं विजनमाह नितान्ततीव्रं
चात्यन्तनिर्घृणमतीव भयानकं च ॥ १५ ॥
त्वत्स्वामिने हि विगणय्य वितीर्य दीना-
राणां सहस्रमधुनैव समग्रमेव ।
दासीकृतस्त्वमिह वाञ्छितकर्महेतोः
क्षिप्रं मया प्रकुरु तद्यदहं ब्रवीमि ॥ १६ ॥

यद्येकमेव भवता क्रियतेऽद्य कार्यं
सद्यस्तु तेन भविता तव दास्यमुक्तिः ।
तत्त्वं करोषि यदि नैव तु मूर्खभावा-
च्छास्तिं परामनुभवस्यधुनैव मत्तः ॥ १७ ॥

श्रुत्वेत्यसौ समुपजातनितान्तहर्ष-
स्त्वान्तर्व्यथाभयविषादनिरस्तधैर्यः ।
पप्रच्छ तां जननि किं क्रियते मयाद्य
तद्यत्र दुष्करतमेऽस्ति मनोरथस्ते ॥ १८ ॥

सा प्रत्यभाषत कुरागविनष्टबुद्धि-
र्मांसं पुनः स्थितमिमं विकरालवक्त्रम् ।
एतौ मदीयतनयौ सहसाधुनैव
गूढं निहत्य कुरु वाञ्छितपूरणं मे ॥ १९ ॥

आकस्मिकोद्गततडिद्विनिपाततुल्यं
श्रुत्वा तदेवमतिमात्रगतघृणोऽपि ।
कर्णौ पिधाय स बभूव दयार्द्रचित्तः
कश्चूतचम्पकतरू जडधीश्छिनत्ति ॥ २० ॥

तां व्याजहार धरणौ प्रणिपत्य दासो
ब्रूह्यन्यदद्य ननु यत्तदहं करिष्ये ।
निष्कारणं जननि रम्यगुणाभिरामौ
कान्ताकृती तव सुतौ तु कथं निहन्याम् ॥ २१ ॥

कन्दर्पदर्पहरकान्तिसुरूपरम्या-
वेतौ निहन्तुमपि सर्वजगत्कृतान्तः ।
कारुण्यमावहति चेतसि हा कृतान्तो
मातः प्रसीद विपरीतधियं त्यजातः ॥ २२ ॥

देशेऽस्मिन्नप्यखिल एव हि विश्रुतौ तौ
राजोचितप्रवरलक्षितलक्षणत्वात् ।

हन्यां कथं यदि च केनचिदेतदेवं
दृष्टं श्रुतं च भविता मम ते च शास्तिः ॥ २३ ॥
तेनापि निर्दयतरेण तथाविधेन
प्रोक्ता विधाय विनयं च भयं च दत्त्वा ।
नो दुर्ग्रहात्तु विचचाल कुकामिराग-
ग्रस्तस्वबुद्धिरतिनिर्दयतां जगाम ॥ २४ ॥
तस्या नितान्तमिति दुर्ग्रहमाकलय्य
स्वार्थातिसाध्वसवशीकृतचित्तवृत्तिः ।
अङ्गीचकार स कथंचिदहो तदीय-
पुत्रद्वयप्रलयकर्म ततो भुजिष्यः ॥ २५ ॥
अत्रान्तरे हि विहगीविनिगीर्णमस्थि-
वक्षःप्रभावसमुपार्जितवित्तराशिः ।
ज्येष्ठानुजस्य तु बभूव सदैव दीना-
राणां शतत्रितयलाभवशेन तस्य ॥ २६ ॥
क्रीडानिमित्तमथ तौ विजनं स नीत्वा
बालौ नरेन्द्रतनयौ विगतात्मशङ्कौ ।
जग्राह वक्षसि निधाय बत स्वमुष्टिं
हन्तुं रुषा सपदि राहुरिवार्कचन्द्रौ ॥ २७ ॥
पप्रच्छतुस्तमवनीशसुतावकस्मा-
त्कस्मात्प्रकुप्यसि सखे बत निर्निमित्तम् ।
दासत्वमेव कुरुषे सततं हि नस्त्वं
नास्माभिरप्रियमकारि तवाद्य किंचित् ॥ २८ ॥
श्रुत्वेत्युवाच स ततः परिचारकस्तौ
केनापि कारणवशेन भवज्जनित्री ।
रोषाकुलास्ति युवयोरधुना नितान्तं
सोऽहं प्रयुक्त इह वामनया निहन्तुम् ॥ २९ ॥

किंचित्त्वदीयवपुषोस्तु भवान्न कुर्या-
त्तौ त्वं निहत्य सहसा प्रकटं समेहि ।
इत्यादिदेश जननी युवयोरिदानीं
मां किं करोमि परतन्त्रनिजक्रियस्तत् ॥ ३० ॥
दृष्ट्वा युवां हि निहतौ धनजातहर्षा-
दङ्गीचकार मम किंकरकर्ममुक्तिम् ।
सा चान्यथा विविधया तनयातिपीडां
स्वार्थान्स भीतिवशगः किमहं करिष्ये ॥ ३१ ॥
तावूचतुः सविनयं प्रणिपत्य दासं
संभूतभूरितरभीतिसकम्पचित्तौ ।
नैवार्हसि त्वमिह हन्तुमनागसौ नौ
साधो विचारय मनस्यधुना स्वयं तत् ॥ ३२ ॥
निष्कारणं च यदि हंसि सखेऽधुनावां
पापं भविष्यति नितान्तममन्ददुःखम् ।
त्वं घातयन्सपदि नौ यदि केनचिच्च
दृष्टः खलीकृतिमवाप्स्यसि चानिवार्याम् ॥ ३३ ॥
अङ्गीकृता यदि तया हितया जनन्या
हत्वा हि नौ तव तु किंकरकर्ममुक्तिः ।
तत्पुंसु सत्सु कथमर्हति मङ्क्षु रामा
कर्तुं यथेच्छमधिकारममन्ददर्पात् ॥ ३४ ॥
कर्तुं सखे स्वपरिचारककर्ममुक्तिं
आवां विलिख्य निजलेखमिहैव तुल्यम् ।
व्यक्ताक्षरैः स्वयमुताद्य तथा ददाव
त्वां जातुचिन्न तु रुणद्धि यथैव कश्चित् ॥ ३५ ॥
भोगार्थमप्यतनुहर्षकरं च दीना-
राणां सहस्रमपि संप्रति दीयते ते ।

स्वार्थो भवत्यभिमतो भवतो नितान्तं
पुण्यं च नौ तदपि रक्षसि चेद्विचार्य ॥ ३६ ॥
किं चान्यथा तव सखे गुरु पातकं स्या-
त्स्वार्थोऽपि नश्यति न तुष्यति कोऽपि बुद्ध्वा ।
नो सा भविष्यति च किंकरकर्ममुक्तिः
स्त्रीणां मतं हि विफलं सति पुंसि यस्मात् ॥ ३७ ॥
तद्भोः प्रसीद कुरु मा गुरु पातकं नौ
त्रायस्व संप्रति सखे श्रय साधुवादम् ।
कीर्तिं नितान्तमिह चापरलोकपथ्यां
श्रेयस्करं प्रबलपुण्यमलं गृहाण ॥ ३८ ॥
श्रुत्वेत्यभाषत ततो मुदितः स दीना-
राणां सहस्रमिह मे त्वरितं युवाभ्याम् ।
तद्दीयते यदि च संप्रति लेखपत्रं
रक्षामि वां भवतु यत्तदतो ममाद्य ॥ ३९ ॥
तस्मै विलिख्य प्रददौ नितरां प्रतुष्टो
ज्येष्ठः स्वलेखमथ किंकरकर्ममुक्त्यै ।
तस्यानुजश्च सहसैव यथोक्तदीना-
राणां सहस्रमपि जीवितरक्षणार्थम् ॥ ४० ॥
ततः प्रमुदितो भृशं द्रविणतः सदा मेरकः
उवाच नृपतेः सुतौ भयविकम्पिताङ्गौ पुरः ।
पलाय्य ननु कुत्रचिद्विपुलरंहसा गम्यतां
व्रजाम्यपरदेशमध्यमहमप्यलं साध्वसात् ॥ ४१ ॥
श्रुत्वैवं गिरमुच्चकैः प्रमददां तौ भूमिपालात्मजौ
मार्तण्डातपतप्तधन्वधरणौ पीयूषवृष्टिं यथा ।
दूरं क्वापि तु जग्मतुः प्रतिभयास्त्वं मन्यमानौ पुन-
र्जातं भूरिजवोद्गतामिततरोच्छ्वासे प्रकम्पाकुलौ ॥ ४२ ॥

इति देलरामाकथासारे कामुकाराधनार्थं दासविमुक्त्यनन्तरं पुत्रद्वयपरदेशगमनं नाम षष्ठः सर्गः ।

---

सप्तमः सर्गः ।

गच्छन्तौ विपुलाध्वखिन्नवपुषौ क्षुत्क्षामकण्ठौ भृशं
नानारम्यगवाक्ष्यहर्म्यरुचिरागारावलीदन्तुरम् ।
तीक्ष्णानल्पसुशिल्पमूर्तिजनितासंसेवितं कंचिद-
प्येकं सत्पुटभेदनं पृथुधनं संप्रापतुस्तौ क्रमात् ॥ १ ॥
तत्काले विधियोगतो नरपतिस्तत्रागमत्पञ्चतां
तद्दुःखाकुलसाधुवर्यसचिवान्बाष्पाम्बुसिक्ताननान् ।
स्वप्ने दिव्यपुमाञ्जगाद सहसा कश्चित्समभ्येत्य ता-
न्प्रत्येकं दयया निशीथसमये व्योम्नोऽवतीर्य स्वयम् ॥ २ ॥
युष्मद्भाग्यवशान्महम्मदसुरत्राणात्मजः सद्गुण
इब्राहीम इति प्रसिद्धनिजनामेह भ्रमँश्चागतः ।
राजद्वारि निशाक्षये रुचिरसद्रूपो हि यो दृश्यते
तस्मै राज्यमिदं भवद्भिरधुना सर्वैर्द्रुतं दीयताम् ॥ ३ ॥
इत्युक्त्वा सचिवान्स दिव्यपुरुषोऽप्येकैकशोऽन्तर्दधे
स्वप्ने तेऽपि तदित्थमत्र वचनं चेतोहरं दुर्लभम् ।
अन्योन्यं जगदुः प्रहृष्टमनसः प्रातस्ततस्तत्यजुः
स्वक्षोणीपतिमृत्युकालजनितस्वान्तव्यथावैशसम् ॥ ४ ॥
अत्रान्तरे तौ क्षितिपालपुत्रावितस्ततः संभ्रमतो भ्रमन्तौ ।
पुरं प्रविश्य श्रियमीक्षमाणामेकां मसेदामथ पश्यतः स्म ॥ ५ ॥
तत्रोपविश्य श्रमविश्लथाङ्गो ज्येष्ठोऽनुजं प्राह स राजपुत्रः ।
भ्रातः श्रियं पश्य पुरोत्तमेऽस्मिन्नदृष्टपूर्वां विविधां मनोज्ञाम् ॥ ६ ॥
एतस्य रम्यां पुटभेदनस्य द्रष्टुं श्रियं संप्रति किं तु बह्वीम् ।
भ्रातस्तदेकेन पथा व्रज त्वं गच्छामि चान्येन च वर्त्मनाहम् ॥ ७ ॥
दिनावसाने च ततो मिलित्वा भ्रातर्मसेदान्तर एव चात्र ।
कथासुखं चानुभवाव उच्चैः परस्परालोकितकौतुकेन ॥ ८ ॥
श्रुत्वेति तद्वाक्यमथो कनीयांस्तथेति चोक्त्वा प्रययौ सुदूरम् ।
उत्थाय सोऽप्यग्रज उच्चकैस्तां द्रष्टुं श्रियं तत्र पुरे चचार ॥ ९ ॥

स चाग्रजोऽगच्छदुदारलक्ष्मीं पश्यन्पुरे तत्र सविस्मयोऽलम् ।
समाससाद क्षितिपालसिंहद्वारं निबद्धामितवारणाश्वम् ॥ १० ॥
सुलक्षणालोकनकौतुकेन पृष्टो जनैरन्वयनामनी सः ।
स्वकीयवृत्तान्तमशेषमेव व्यावर्णयामास नरेन्द्रसूनुः ॥ ११ ॥
निवेदितं तत्र जनैः सहर्षं ततः ससैन्याखिलमन्त्रिमुख्याः ।
पौराश्च बद्धाञ्जलयः समन्तादुपागता राजसुतं प्रणेमुः ॥ १२ ॥
स्वप्नोक्तसल्लक्षणदर्शनेन प्रहृष्टचित्तैः सचिवैस्तदानीम् ।
हिरण्यकुम्भैर्विमलाम्बुपूर्णै राज्येऽभिषिक्तः स रराज राजा ॥ १३ ॥
प्राज्यं स राज्यं समवाप्य नानाभोगोपभोगोत्सुकमानसोऽभूत् ।
कनीयसो भ्रातुरहो कदाचित्सस्मार नो राजसुतस्य तस्य ॥ १४ ॥
अत्रान्तरे स क्षितिपालसूनुर्मो(र्मु)रादभक्षो(वरूशो) दिवसावसाने ।
अदर्शनाद्भ्रातुरहो मसेदासमीपमागत्य शुशोच दुःखात् ॥ १५ ॥
दूराध्वखेदेन बुभुक्षया च भ्रातुर्वियोगेन च पीड्यमानः ।
कथंचिदाहारमसौ तु किंचिच्चकार तत्रापणमध्यमेत्य ॥ १६ ॥
इतस्ततो भ्रातृगवेषणार्थं भ्रमन्प्रभूतव्यसनान्तचेताः ।
स्खलद्गतिर्दूरतराध्वखेदादेकं वरोद्यानमथाविवेश ॥ १७ ॥
व्याकोशपुष्पस्तबकप्रनम्रप्रतानिनीराजिविराजमाने ।
तत्र क्षणं शाखितलोपविष्टस्तुतोष नानाश्रियमीक्षमाणः ॥ १८ ॥
इतस्ततो यावदसौ स्वदृष्टिं क्षिपन्क्षणं शाखितलेऽत्र तस्थौ ।
तदन्तिके तावदथारुरोह प्रोत्तुङ्गसौधं वनिता तु काचित् ॥ १९ ॥
विराजितां साञ्जनहारिनेत्रद्वयेन सभ्रूभङ्गजितोत्पलेन ।
प्रोत्तुङ्गपीनस्तनयुग्मशोभाहिरण्यकुम्भाहितकान्तिगर्गा(र्भा)म् ॥ २० ॥
आश्यामधम्मिल्लविधुंतुदेन भ्रान्त्या सुसंपूर्णतुषाररश्मेः ।
व्योम्नोऽवतीर्य द्रुतमेव भूमौ रुषेव पश्चात्समुपात्तवक्राम् ॥ २१ ॥
लावण्यपाथोनिधिरत्नवीचिं तारुण्यहेमाद्रिहिरण्यवल्लीम् ।
सुकान्तिगङ्गानलिनीं प्रफुल्लां शृङ्गारमद्भूमिरुहालवालाम् ॥ २२ ॥

दम्भोलिमध्यामपि वंशनासामानन्ददामन्दसुसुन्दरत्वात् ।
तां सुन्दरीं वीक्ष्य ननन्द तत्र पूर्णेन्दुवक्त्रां स नरेन्द्रसूनुः ॥ २३ ॥
(चतुर्भिः कुलकम्)
ततः स दध्यौ नरनाथसूनुर्नवीनसंभूतमनोभवार्तिः ।
इयत्यहो नो ददृशे न काचिन्मया पुरेऽस्मिन्भ्रमता पुरंध्री ॥ २४ ॥
किमप्सराः काचिदियं तु नाकाच्छापावतीर्णा धरणीतलेऽत्र ।
पुरान्तरात्किं बहिरन्यथेयं व्यक्तं समारुह्य करोति हर्म्यम् ॥ २५ ॥
ध्यात्वेति निर्याय नरेन्द्रसूनुरुद्यानमध्यात्सहसा ततः सः ।
तदन्तिके कांचिदुपेत्य दासीं पप्रच्छ केयं ललना स्थितेति ॥ २६ ॥
सा चेटिका भूमिपतेस्तनूजं जगाद जातामितकौतुकं तम् ।
इयं पुरेऽस्मिन्प्रथिताभिरामा वेश्यास्ति नाम्ना खलु देलरामा ॥ २७ ॥
दीनारराशिं विगणय्य सद्यः शतत्रयं यो हि ददाति चास्यै ।
एकां स रात्रिं भजते विचित्रभोगैः सुखं साकमथानयेह ॥ २८ ॥
श्रुत्वेति संचोदितचित्तवृत्तिर्लब्धावकाशेन मनोभवेन ।
अद्य प्रयच्छामि शतत्रयं यत्तूर्णं समावेदय चेत्युवाच ॥ २९ ॥
ततस्तया हर्षपुरःसरं तत्समीपमागत्य निवेदितः सः ।
तदीयवाचा प्रविवेश देलरामाभिरामालयमुच्चशोभम् ॥ ३० ॥
विलोक्य तं साद्भुतरूपकान्तिं मनोहराकारमुदारशोभम् ।
प्रत्युद्ययौ जातनितान्तहर्षा निजासनार्धे सविधे निधाय ॥ ३१ ॥
नानास्वलंकारभराभिरामां सदान्यरामाधिककान्तिकान्ताम् ।
विलासहास्यादिगुणाविरामां ददर्श हर्षादथ देलरामाम् ॥ ३२ ॥
अन्योन्यमालिङ्ग्य ततोऽतिगाढं कपोलयुग्मं परिचुम्ब्य चैव ।
प्रीतिं प्रकल्प्य प्रथमं नितान्तं चैकं त्वलंचक्रतुरासनं तौ ॥ ३३ ॥
चेटीगिरा तत्पुरतस्तदानीं दीनारराशिं विगणय्य सद्यः ।
स सर्वमेवात्र तु सावहेलं चिक्षेप वस्त्रान्तरतो विकृष्य ॥ ३४ ॥
तदन्तिके चाथ विचित्रशोभं पर्यङ्कमारुह्य नितान्तरम्यम् ।
नानाविधैर्भोगचयैर्यथेच्छं संभोगसौख्येन च पिप्रिये सः ॥ ३५ ॥

ततो गतायां कमनीयभोगैर्मुहूर्तवत्तत्र तु यामवत्याम् ।
प्रविश्य चेटी तमुवाच कोपान्निर्याहि तूर्णं सदनादमुष्मात् ॥ ३६ ॥
दत्ता यथा ह्यो भवता स्वभाटी तथाद्य योऽस्यै हि ददाति कामी ।
स एतया साकमिहैकरात्रिं भोगान्यथेच्छं भजते मनोज्ञान् ॥ ३७॥
श्रुत्वेति तद्वाक्यमथाभ्यधात्तां मयैव भाटी प्रतिपाद्यतेऽद्य ।
तथैव ह्यः किं तु यथैव नूनं मिथ्यातिकोपं त्यज चेटिके त्वम् ॥ ३८॥
उक्त्वेति संरम्भवशेन तूर्णं प्रक्षिप्य भाटीं पुरतो यथोक्ताम् ।
तथैव भेजे विविधान्नपानस्वेच्छाहितानल्परतोपभोगान् ॥ ३९ ॥
तस्यां गतायामपि यामवत्यां तथैव दासीवचनेन सद्यः ।
प्रक्षिप्य भाटीं पुरतो यथोक्तां निशामुखं प्राग्वदसौ सिषेवे ॥ ४० ॥
इत्थं तदानीं कतिचिद्दिनेषु यातेषु दध्यावथ वारयोषित् ।
यथोक्तदीनारसमर्पणेन प्रभूतसंभूतकुतूहला सा ॥ ४१ ॥
अहो न कोशादि विलोक्यतेऽस्य स्वहस्तगं नो द्रविणं च किंचित् ।
न चापि कश्चिद्भृतकोऽनुयायी बहिश्च नो निर्गमनं कदाचित् ॥४२॥
कुतः समानीय ददाति वित्त चेटीगिरा संप्रति तूर्णमेषः ।
यथोक्तदीनारचयं हि मह्यं को हेतुरत्रेति न वेद्मि हन्त ॥ ४३ ॥

इत्थं विमृष्य सुचिरं हृदये तदानीं
ज्ञातुं तदीयधनसंभवकारणं सा ।
कर्तुं च किंचिदपि कौतुकमात्मसिद्ध्यै
तं चापि वञ्चयितुमेव समुद्यताभूत् ॥ ४४ ॥

इति देलरामाकथासारे देलरामासमागमनानन्तरं राजपुत्रस्य वञ्चनोपायो नाम सप्तमः सर्गः ।

---

अष्टमः सर्गः ।

अथ समारभतात्मधनेन सा वरतरं स्वमहोत्सवमेकदा ।
मधु नितान्तमपाययदत्र तं सविनयं प्रणिपत्य पुनः पुनः ॥ १ ॥
मधुमदेन तु निष्कलमीक्ष्य तं विनयपूर्वमपृच्छदसौ स्वयम् ।
किमिति वित्तचयेन भवेद्विभो यदि भवद्विध एति सुकामुकः ॥ २ ॥

अहमतो ह्यधुना तव किंकरी ललितकान्तिवशीकृतमानसा ।
त्वमपि जीवितनाथ इहास्ति यन्मम धनं त्वदधीनमिदं हितम् ॥ ३ ॥
तदपि कौतुकमेकमिहाद्य मे मनसि जीवितनाथ विजृम्भते ।
यदसितोत्कलिकावशतः सदा न रसिकासि तु कुत्रचिदप्यहो ॥ ४ ॥
तदहमस्मि तवाद्य यदि प्रिया यदि च वेत्सि तु मामनुरागिणीम् ।
मयि चिकीर्षसि चेत्त्वमनुग्रहं कथय तत्कुतुकं विनिवारय ॥ ५ ॥
इति निशम्य तदीयगिरं ततो मधुमदापहृताखिलचेतनः ।
सपदि तां तदपृच्छदसौ तदा किमिति संभ्रमतो नृपनन्दनः ॥ ६ ॥
अथ ततो गणिका निजगाद सा यदि विवर्णयसि स्फुटमद्य मे ।
यदि न कुप्यसि नाथ मनागपि प्रियतम ध्रुवमद्य वदामि तत् ॥ ७ ॥
वद तदद्य तु वेद्मि यदि प्रिये ध्रुवमिह द्रुतमेव मयोद्यते ।
इति निशम्य नृपात्मजभारतीं सपदि वक्तुमसावुपचक्रमे ॥ ८ ॥
न निजधाम न चानुचरागमो न च बहिर्गमनं तव दृश्यते ।
न हि तु किंचिदपि स्वकरेऽप्यहो किमपि नैव च भाण्डमपि प्रभो ॥ ९ ॥
इयदहो प्रतिवासरमेव तत्कुत इदं द्रविणं तव विद्यते ।
इति हि जीवितनाथ कुतूहलं मनसि संप्रति तिष्ठति मेऽनिशम् ॥ १० ॥
अथ स वारवधूमविदन्निमां कुसृतिवञ्चनतत्परमानसाम् ।
सुपरिपीतघनासवमोहितः सरलहृत्समभाषत सत्यतः ॥ ११ ॥
शृणु पुरैकविहंगसुता हि नः समभवत्सघने सदने कृशा ।
बत निहत्य तु तामपचत्कदाचिदपि मज्जननी विजने स्वयम् ॥ १२ ॥
अथ तमेव तदीयमुरस्तदा द्रुततरं विनिगीर्य निजे गृहे ।
किमपि कर्म विधातुमथो बहिर्विगतमातरि जातबुभुक्षया ॥ १३ ॥

यतः प्रभृति खादितं तदपि किं तु वक्षो मया
ततः प्रभृति सर्वदा द्रविणमेतदुत्पत्स्यति ।
निजोरसि च वल्लभे किल तदस्ति जानेऽस्ति मे
तदन्तिकतमांशुके कथमिदं भवेदन्यथा ॥ १४ ॥

इति स्फुटतरं गिरं सपदि सा समाकर्ण्य तां
विधाय मधुना समं मुदितमानमामिश्रितम् ।
तथाविधघनासवापहृतचेतनाय द्रुतं
ददौ तु वमनौषधं नृपसुताय तस्मै तदा ॥ १५ ॥

ववाम सकलं ततो यदपि जग्धमेवाशनं
महामणिमनोहरं तदपि चास्थि वक्षोऽन्तरात् ।
निपीतमदिरालवस्रवदमन्दनासाम्यवा-
न्स भूमिपतिनन्दनः सपदि खेदितो विव्यथे ॥ १६ ॥

नरेन्द्रतनये ततो वमनखेदसुप्ते निशि
प्रहृष्टगणिकाप्यसौ तदतिवान्तभोज्यान्तरात् ।
गवेष्य च विलोक्य निर्मलतरं विधायास्थि त-
न्निगीर्य च तदन्तिके व्यधित तत्र निद्रासुखम् ॥ १७ ॥

प्रभातसमये तया सपदि चोदिता चेटिका
जगाद घनमन्युना नृपतिनन्दनं निर्धनम् ।
इतोऽपसर सांप्रतं त्वपर एति वित्तप्रदः
किमत्र कुरुषे रुषेति करमाचकर्ष स्वयम् ॥ १८ ॥

उवाच स तु पूर्ववत्समहिमास्थिरत्नास्थया
मयैव खलु दीयते तदखिलं यथोक्तं धनम् ।
त्वमद्य कुरुषे रुषं किमपि चेटिके दुर्मते
यदा न मम विद्यते वसु तदा व्रजामि स्वयम् ॥ १९ ॥

उदीर्य वसनान्तरं निजमिति स्वयं वीक्षते
प्रलब्धुमथ पूर्ववद्द्रविणमत्र यावच्च सः ।
न तावदपि चाप्तवान्किमपि किं तु संस्मृत्य तां
निशान्तरजनश्रुतिं सपदि विव्यथे छिद्रतः ॥ २० ॥

ततः सपदि कुट्टनीप्रमुखसर्वचेटीजनै-
र्धनं हि परिदीयते त्यजत संभ्रमं निष्फलम् ।

इति प्रतिपदं वदन्वत निरुद्धजङ्घाभुजो
हतेन सदनान्तरान्नृपसुतः स निर्वासितः ॥ २१ ॥
गर्हागालिगलार्धचन्द्रमुखभूयिष्ठावमानोद्गत-
व्रीडामन्युविषादसाध्वसवशात्संत्रस्तचित्तस्ततः ।
ध्यायं ध्यायमतीव वारवनिताछद्मानुतापावहो
गन्तुं क्वापि स हन्त भूपतिसुतो दूरं प्रतस्थे तदा ॥ २२ ॥

इति देलरामाकथासारे गणिकाकल्पितकपटवञ्चनानन्तरं राजपुत्रखलीकारो नाम अष्टमः सर्गः ।

---

नवमः सर्गः ।

स्वचापशरमात्रपाणिरतिमात्रदुःखाकुलो
व्रजन्नृपतिनन्दनो वत स निर्धनः प्रस्खलन् ।
अवृत्तिवशतो मुमूर्षुरटवीमथैकां क्रमा-
दवाप गणिकाकुचेष्टितमतीव निन्दन्मुहुः ॥ १ ॥
व्रजन्स पुरतो घनोद्गतबुभुक्षया पीडितः
स्खलत्प्रतिपदं विषादहतशक्तिरायासवान् ।
परस्परविवादतः प्रकुपितं त्वरण्यान्तरे
ददर्श मनुजत्रयं सपदि तत्र भूपात्मजः ॥ २ ॥
उपेत्य सहसा ततो नृपसुतः स पप्रच्छ ता-
न्विवादमिह निर्जने कुरुत किंनिमित्तं रुषा ।
ममाद्य वदत स्वयं कलहहेतुमङ्ग ध्रुवं
विचार्य करवै च वो निजसमीहितं हृद्गतम् ॥ ३ ॥
इत्थं निशम्य वचनं हृदयंगमं त-
त्कंचिन्महान्तमपि तं प्रविभाव्य कान्त्या ।
तन्मध्यतः सपदि कश्चिदुवाच तत्र
त्वेको नरः सविनयं च सहर्षमेव ॥ ४ ॥
भस्त्रांशुकश्च रुचिरोऽभिनवस्थलस्था
चेति त्रयं हृशाभिमतमस्ति विभो स्वकीयम् ।

वस्तुत्रयं वरमिदं तदिहाद्य भागी-
कर्तुं विवाद उदभूदितरेतरं नः ॥ ५ ॥

त्वं कोऽपि संप्रति किलावसरेऽस्मदीय-
भाग्यैरिहागत उदारतरस्वबुद्धिः ।
भागीकुरुष्व तदिदं कृपया क्षणं नो
यद्यस्य वेत्सि तदितस्तु विचार्य देहि ॥ ६ ॥

पप्रच्छ राजतनयः स ततः प्रभूत-
संभूतकौतुकवशेन नरं तमेकम् ।
वस्तुत्रयस्य वद को महिमास्य साधो
यत्कारणेन भवतां जनितो विरोधः ॥ ७ ॥

एको नरः स निजगाद नरेन्द्रसूनुं
श्रुत्वेति वाक्यमथ तत्र पुरः प्रणम्य ।
भस्त्रेयमङ्ग ननु यस्य करेऽस्ति दीना-
राणां शतत्रयमसौ लभते सदैव ॥ ८ ॥

नित्यं स्वहस्तनिजदत्तयथेच्छनिष्कै-
र्भोज्यादिकं सपदि दूरतरादपि द्राक् ।
नेदिष्टमानयति तस्य सुभाग्यभाजः
कीरोऽप्यसौ प्रवरधीरुत यस्य पुंसः ॥ ९ ॥

एषापि यस्य कृतिनो भवति स्थलस्था
स्थानं स यत्सपदि वाञ्छति गन्तुमद्धा ।
प्राप्नोति तत्त्वरितमेव परैरदृष्टो
वैमानिकोपमजवेन नितान्तसौख्यात् ॥ १० ॥

श्रुत्वेति तं स निजगाद नरेन्द्रसूनु-
र्जानाम्यहं वरगुणान्हि परस्परं वः ।
कस्मै मयाधिकतमो रुचिरः स्वभाग-
स्तद्दीयतेऽलमिति चेतसि संशयो मे ॥ ११ ॥

आकृष्य चापमित एव शिलीमुखांस्त्री-
न्मुञ्चामि वो जवगुणं विनिरीक्षितुं तत् ।
एकैकशः परिगृहीतमदीयवाणो
यः पूर्वमन्तिकमिहैति स ज्येष्ठभागी ॥ १२ ॥

आकर्ण्य वाचमिति तैस्तु तथेति चोक्ते
कर्णान्तकृष्टहठगाढतरस्वचापः ।
वेगेन दूरतरगामिनरेन्द्रसूनु-
र्बाणत्रयं सपदि दिक्त्रितये मुमोच ॥ १३ ॥

तेपु द्रुतं तदभिधावनसोद्यमेपु
त्यक्त्वा स्ववस्तुचयमस्य समीप एव ।
प्राहोपविश्य नृपसूनुरथो स्थलस्थां
भस्त्रां शुकं च निजहस्तगतं विधाय ॥ १४ ॥

माहात्म्यतस्तव जनन्यधुनैव देल-
रामान्तिकं द्रुततरं घनरंहसैव ।
प्राप्नोम्यहं ननु यथैव तथा कुरुष्व
त्वं मे प्रसादमवसाद निगर्हणार्हम् ॥ १५ ॥

वाङ्मात्रतः सपदि भूपसुतः स तस्याः
शय्यासमीपमथ तत्क्षणमाससाद ।
साश्चर्यमेव च ससाध्वसमन्तिके तं
दृष्ट्वा व्यचिन्तयदसावपि वारयोषित् ॥ १६ ॥

असद्गृहे बहुविधामिति रक्षिवर्गै
र्नावेदितो न हि च केनचिदेव दृष्टः ।
सोऽयं कथं सपदि मे निकटं प्रविष्टो
भूयिष्ठविस्मयकरः स्वविशिष्टबुद्ध्या ॥ १७ ॥

कोऽपि ध्रुवं समहिमायमुदारकीर्ति-
स्तत्सांप्रतं विनयमेव करोमि चास्य ।

ध्यात्वेति वारवनिता विततार सद्यः
खट्वातलात्प्रमुदितेव समुत्सुकेव ॥ १८ ॥
अभ्यर्णमेत्य चरणद्वितयं प्रणम्य
तज्जानुयुग्ममपि सा परिचुम्ब्य सद्यः ।
बाहुद्वयेन च बलिं विरचय्य चाग्रे
भूमौ ततः समुपविश्य च तं बभाषे ॥ १९ ॥
दिष्ट्या चिरेण मम लोचनगोचरत्वं
यातः प्रभो कथय कुत्र तदद्य तावत् ।
आसीद्भवान्विपुलसद्गुणवान्स्वकान्ति-
लावण्यवान्प्रवरवारणबन्धरज्जुः ॥ २० ॥
पापागुणैर्विरहिता बत कुट्टनीयं
चेट्योऽपि दुष्टमतयः सदने वसन्ति ।
स्वैरं कुकर्म रचयन्ति निकाममद्धा
याभिः कुबुद्धिवशतो नरिनर्तितासि ॥ २१ ॥
प्राणप्रियस्त्वमपि याभिरहो हठेन
निर्वासितः सपदि हन्त हि कद्वदाभिः ।
मद्धारतीमपि निरस्य विहस्य ताभि-
राक्रान्तवेश्मवशतः किमहं करिष्ये ॥ २२ ॥
नाथ प्रसीद कुरु मा मयि चावहेलां
लीलां कुरुष्व किल पूर्ववदेव तस्मात् ।
उक्त्वेति वाररमणी रमणीयवाणी
तं भूमिपालतनयं दृढमालिलिङ्ग ॥ २३ ॥
सोऽपि क्षणेन विनिवार्य तु मौनमुद्रां
भस्त्रां निधाय वसनान्तर एव गूढम् ।
आलप्य किंचिदपि हास्यकरं स्वदीना-
राणां शतत्रितयमाक्षिपदेतदग्रे ॥ २४ ॥

तस्यासने तु विनिरीक्ष्य नवां स्थलस्था-
मेकं शुकं च करगं परितुष्टचित्ता ।
पप्रच्छ वस्तुयुगलस्य तु तस्य वार्तां
संजातविस्मयवशेन नरेन्द्रसूनुम् ॥ २५ ॥

सोऽपि मृषैव निजगाद तु सावहित्थं
छिद्रं विदन्पुनरपि क्षितिपालसूनुः ।
एकस्य कस्यचिदिदं करगं बभूव
वस्तुद्वयं स च ददौ प्रणयेन मह्यम् ॥ २६ ॥

उक्त्वेत्यथो बहुविधामितभोजमद्य-
पानादिकं सह तया स विधाय रात्रौ ।
खट्वातलेऽतिरुचिरे शयनार्थमुच्चै-
रभ्यर्थितोऽपि न मुमोच निजां स्थलस्थाम् ॥ २७ ॥

तस्यानुरोधवशतो निजतूलितल्प-
मुत्सृत्य वारवनितापि तदन्तिके सा ।
शय्यां व्यधात्कृतकरागवशावतीर्णा
पर्यङ्कतः सपदि भूरितरादरेण ॥ २८ ॥

याते ततो नृपसुतः स निशैकयामे
याम्ये तया क्वचिदितः सह चिन्तयेति ।
निर्निद्र एव समभाषत तां स्थलस्थां
सुप्तां विभाव्य तदुपर्यबलां समीपे ॥ २९ ॥

यत्रास्ति नो वसतिरेव हि यत्र रथ्या
न ज्ञायते जननि कुत्रचिदप्यजस्रम् ।
अम्भोनिधिः परित एव विभाति यत्र
द्वीपं तदद्य नय मामनया समेतम् ॥ ३० ॥

इत्थं राजसुतो निगद्य स ततो रात्र्यन्धकारे घने
भल्लाकीरकरश्च वारवनितायुक्तस्तदानीं सुखम् ।

तन्माहात्म्यवशेन वासभवनान्निर्याय चालक्षित-
स्तद्द्वीपं समवाप वाञ्छिततरं मध्येसमुद्रं द्रुतम् ॥ ३१ ॥

इति देलरामाकथासारे वस्तुत्रयप्राप्त्यनन्तरं देलरामां वासभवनादाकृष्य तया साकं राजपुत्रस्य सिन्धुद्वीपगमनं नाम नवमः सर्गः ।

---

दशमः सर्गः ।

प्रातरत्र सहसा विहाय निद्रामसावथ विलासिनी तदा ।
न व्यलोकत निजं गृहादिकं केवलं च परितः पयोनिधिम् ॥ १ ॥
सा ततो विपुलजातसाध्वसातङ्कसंकुचितदर्पगौरवा ।
तत्र वारवनिता व्यचिन्तयद्भूमिपालसुतमायया छलम् ॥ २ ॥
हन्त मे प्रतिकृतिर्दुरात्मनाश्वास्य किं तु विहितामुनाधुना ।
क्व व्रजामि तदितो महार्णवात्प्रोल्लसद्विपुलवीचिसंचयात् ॥ ३ ॥
मामकं सदनमाययौ यथा गूढमेष नितरामलक्षितः ।
तत्तथेह च हि मां द्रुतं ममाकृष्य वासभवनादिहागतः ॥ ४ ॥
किं प्रलापनिवहैर्वृथा कृतैः सावहित्थमिह वच्म्यद्य मे ।
युक्तमेव परथा त्वहं रुषा चेदनेन निहता शृणोति कः ॥ ५ ॥
एवमत्र तु विचिन्त्य तं प्रबुद्धं जगाद मुदितेव तत्क्षणम् ।
शोभनं हि भवता विनिर्मितं कर्मतोऽर्थयति मामकं मनः ॥ ६ ॥
कुट्टिनी गतघृणा हि तत्र मां त्वत्परायणतमां विलोक्य सा ।
संततं भ्रुकुटिमेव मन्युना दुर्मतिः प्रकुरुते स्म भूरिशः ॥ ७ ॥
अद्य तावकधिया नृशंसधीः सा क्व चाहमपि च क्व दूरतः ।
एकया तदपि हन्त चिन्तया व्याकुलास्मि नितरामिह प्रभो ॥ ८ ॥
ग्राम एव न च पत्तनं विभो दृश्यतेऽत्र न तु मानुषागमः ।
केवलं जलधिरेव सर्वतः सांप्रतं किमुपभुज्यते हि तत् ॥ ९ ॥
सोऽभ्यधान्नृपसुतः प्रहर्षवान्वारयोषितमथो विहस्य ताम् ।
भुङ्क्ष्व यन्मनसि रोचते प्रिये तुभ्यमद्य भव धीरधीः सदा ॥ १० ॥
इत्युदीर्य सभयां प्रियां समाश्वास्य कीरमवदत्पुरःस्थितम् ।
किंचिदेव किल तत्करे समर्प्य स्ववित्तमवनीशनन्दनः ॥ ११ ॥

मत्समीपमिह सन्मतेऽधुनान्विष्य भद्र हि कुतश्चिदुत्तमात् ।
तूर्णमेव पुटभेदनाद्धनाद्भोज्यमानय वरासवान्वितम् ॥ १२ ॥
सोऽथ तद्वचनमात्रतस्तदोत्पत्य खं सपदि सन्मतिः शुकः ।
आनिनाय ललितं कुतश्चिदस्यान्तिकं विविधमासवाशनम् ॥ १३ ॥
आसवं बहुविधं च भोजनं तच्छुकाहृतमनेन दुर्लभम् ।
सा सुधाफलसमे समं समास्वाद्य वारवनिता विसिस्मिये ॥ १४ ॥
प्रत्यहं स तु तथैव कीरराडाजहार वरमासवाशनम् ।
सोऽपि भूमितनयस्तया समं निर्विशङ्कमघसत्पपौ सुखम् ॥ १५ ॥
एवमत्र शुकमन्त्रताहृतानल्पभोज्यमधुमुख्यभोग्यवान् ।
कालमेष दयितासखस्तदा कंचिदेव सुखमत्यवाहयत् ॥ १६ ॥
जातुचित्तमवदन्नृपात्मजं वारयोषिदथ छिद्रदर्शिनी ।
आर्यपुत्र न हि विद्यते····नौ कर्म किंचिदपि देहखेददम् ॥ १७ ॥
मन्दमन्दमपि तच्छनैः शनैर्भोजनं ह्यविरतं विधीयताम् ।
किं न नाथ सततं महामते स्वैरमत्र विजने मनोहरे ॥ १८ ॥
वासरद्वयकृते यदानया माससंततमसौ शुकः सुधीः ।
तत्समाहरतु भोज्यमुच्चकैः सासवं सकृदनल्परंहसा ॥ १९ ॥
एष चापि न भवेद्गतागतैः खेदितो हि शुकराट् पुनः पुनः ।
हृत्प्रमोद उत(?)जावयोः प्रभो जायते बहुविधाशनेन तत् ॥ २० ॥
सोऽब्रवीन्नृपतिनन्दनस्ततस्तां तदा कपटवञ्चनोद्यताम् ।
ह्यस्तनं कथमिहोपभुज्यते नव्यमेव परिवर्ज्य भोजनम् ॥ २१ ॥
वारितापि नितरां पुनः पुनः सा तदेव गणिका समभ्यधात् ।
सोऽपि राजतनयस्तथाकरोत्कीरमाशु विनियोज्य(?)सर्पतिम् ॥ २२ ॥
रंहसैव सहसागते शुके भोज्यमत्र परिगृह्य सासवम् ।
न्यस्तजानु नितरामपाययत्सा नरेन्द्रतनयं भृशं मधु ॥ २३ ॥
क्षीवतामुपगतं विलोक्य तं सा समञ्जसतराधभाषितम् ।
वारयोषिदतिहर्षितः स पप्रच्छ स प्रणयमुच्चकैरिति ॥ २४ ॥

नाथ तुष्यति मदीयमानसं ह्यत्र रम्यतलभूरिशाद्वले ।
संगमेन तव भोगसंचयैर्हृत्प्रियैः परमदुर्लभैः सदा ॥ २५ ॥
कौतुकं तदपि नाथ विद्यते चैकमेव नितरां मनस्यतः ।
नागदुर्लभतरात्तभोगहृष्टापि सम्यगिह नो भजे सुखम् ॥ २६ ॥
सोऽथ तामवददत्र वल्लभे ब्रूहि यन्मनसि वर्तते तव ।
त्वत्कृते हि सहसा करोमि तत्किं न सिध्यति ममाद्य सुन्दरि ॥ २७ ॥
तोषिताथ सुतरां जगाद सा भूपनन्दनमिदं निशम्य तत् ।
संततं व्ययकृते कुतस्त्वया दीयते धनमियद्वनान्तरे ॥ २८ ॥
एष चापि शुकराट् त्वया कुतो लब्ध उत्तममहागुणः सुधीः ।
मां कथं च निजवेश्मनः समाकृष्य चानयदहो भवानिह ॥ २९ ॥
स्वर्गभूमिरियमेव मन्यते सांप्रतं ननु मया त्वया सह ।
किं तु तावकवराद्भुतक्रियां श्रोतुमस्मि नितरां समुत्सुका ॥ ३० ॥
तन्निशम्य मदिराविमोहितो विस्मृताधमतदीयकैतवः ।
सर्वमेव स शुकादिवस्तुवृत्तान्तमत्र सहसा व्यवर्णयत् ॥ ३१ ॥
तन्निगद्य सुरतासवाशनोद्विग्नतः सपदि भूपनन्दनः ।
तत्र पादयुगलं प्रसार्य निद्रां चकार रजनीमुखे ततः ॥ ३२ ॥

तत्काल एव सहसा शनकैः स्थलस्था
पृष्टाङ्कुवस्तलनिषण्णमिमं विधाय ।
तस्यां स्वयं समुपविश्य तदन्तिकात्सा
भस्त्रां शुकं च निजहस्तगतं चकार ॥ ३३ ॥
वाणीं जगाद ननु वासगृहं स्वकीयं
तस्मात्मुयां सपदि सांप्रतमेव रात्रौ ।
इत्युक्तिमात्रवशतो गगनाध्वना सा
स्वं वेश्म वारवनिता द्रुतमाससाद ॥ ३४ ॥

दृष्टा साथ चिरेण तीव्रकुतुकात्कासीति पृष्टा तदा
दासीभिः परिचुम्ब्य जानुयुगलं भक्त्या प्रणम्याग्रतः ।

आख्यास्यन्नृपनन्दनस्य विहितच्छद्मक्रियावञ्चना-
वृत्तान्तं सकलं सहास्यवचना हर्षेण वाराङ्गना ॥ ३९ ॥

इति देलरामाकथासारे द्विर्विहितराजपुत्रकैतववञ्चनानन्तरं सिन्धुद्वीपाद्देलारामास्व-
गृहागमनं नाम दशमः सर्गः ।

---

एकादशः सर्गः ।

अत्रान्तरे स नरनाथसुतः समुद्र-
द्वीपे प्रभातसमये सहसा प्रवुद्धः ।
भस्त्रां शुकं च रुचिराभिनवां स्थलस्थां
तां चापि वारवनितां न ददर्श तत्र ॥ १ ॥

स्मृत्वा ततो रजनिमध्यनिरुक्तवाचं
निन्दन्स्वकीयमतिविप्लवमुच्चकैस्तम् ।
सर्वं तयैव विहितं ननु वारवध्वा
मेने विमृष्य कपटं प्रकटं····वुद्ध्या ॥ २ ॥

उच्चैः शुशोच स ततो नरनाथसूनु-
र्जानन्मृतं स्वमुपवासनितान्तयत्नात् ।
अश्नामि किं कथमितश्च तरामि सिन्धो-
रेकोऽधुना वत किमत्र करोमि शून्ये ॥ ३ ॥

आदौ यथैव वत वञ्चित एव योऽह-
माश्वास्य हृद्गतमवोचमहो हि तस्याः ।
धिङ्मां विमर्षरहितं सहितं नितान्तं
मौर्ख्येण येन विपदं वहुशो भजामि ॥ ४ ॥

निर्वासितः प्रथममेव यदानयाहं
दत्त्वार्धचन्द्रमवमानमलं विधाय ।
रथ्या तदा मम बभूव सुखेन गम्या
तन्निर्मिता प्रतिदिनं निजजीवरक्षा ॥ ५ ॥

क्काहं व्रजामि तदितस्त्वधुनातिदुर्गा-
द्रत्नाकरं कथमिमं वत लङ्घयामि

एवं प्रलापमुखरो निजपाणिपृष्ठे
ध्यात्वा मुखं क्षणममन्दशुचा निदद्रौ ॥ ६ ॥
तत्काल एव(?)विधिनियोगवशेन दिव्यं
मञ्जीरमञ्जुतरशिञ्जितमुल्ललास ।
आकर्ण्य तत्सपदि भूपसुतः प्रबुद्ध
उत्थाय चाक्षिपदसौ परितः स्वदृष्टिम् ॥ ७ ॥
बभ्राम काननमितस्तत एव ताव-
दाप्लावसज्जमथ तावदसौ ददर्श ।
सीमन्तिनीत्रितयमत्र विनम्रगात्रं
तीरस्थितानुपमवस्त्रत्रयस्वरूपम् ॥ ८ ॥
उद्वीक्ष्य जातकुतुकः स ततः प्रदध्यौ
नैवेह कस्यचिदपश्यमहं हि वक्त्रम् ।
प्राप्तं ततो द्रुततरं वनितात्रयं तु
भूयिष्ठदृष्टसुविशिष्टगरिष्ठधाम ॥ ९ ॥
जाने हि काश्चिदपि दिव्यवरप्रभावा
एताः स्त्रियो ललितकान्तिवशाद्भवन्ति ।
यत्तन्ममास्तु सहसाभरणादि वस्तु
क्षिप्रं हरामि तदथो किमिवावदन्ति ॥ १० ॥
ध्यात्वेति वारिनिधितीरतलाज्जहार .
सद्यस्तदीयवसनाभरणादि सर्वम् ।
आलोक्य तास्तदिति नग्नसमग्रदेहा
भूपालसूनुमवदन्नितरां हसन्तम् ॥ ११ ॥
भो भो महापुरुष नैतदिहोचितं ते
योगिन्य एव हि वयं त्रिदिवावतीर्णाः ।
स्नातुं समुद्रसलिले विमलेऽधुना त-
न्मा बालचापलवशात्कुरु नर्मलीलाः ॥ १२ ॥

त्वं वञ्चितो ननु यया कपटेन तुभ्यं
तत्राप्युपायवरमद्य वरं वदामः ।
लज्जामहे तदपि ते पुरतो विनग्ना
नीत्वास्मदीयवसनाभरणानि देहि ॥ १३ ॥
श्रुत्वेति ताः स निजगाद नरेन्द्रसूनु-
रादौ वरं ददत मह्यमिहाद्य तूर्णम् ।
मुञ्चामि युष्मदखिलाभरणादि वस्तु-
व्रातं ततः सपदि नापरथा कदाचित् ॥ १४ ॥
आकर्ण्य तस्य वचनं नृपनन्दनस्य
चैका जगाद वनसंमुखदत्तदृष्टिः ।
संवर्धितः स्वयमसौ हि मयात्र शाखी
कृत्वालवालमयमेव महाप्रभावः ॥ १५ ॥
एतत्पलाशमपि यो मनुजो हि धत्ते
वस्त्रान्तरे यदथ वा निजपाणिमध्ये ।
स प्रत्यहं प्रकुरुतेऽतिसुखेन दीना-
राणां शतत्रयमवाप्य यथेष्टभोगान् ॥ १६ ॥
अन्याप्युवाच तरुरेष महान्मदीयो
यो धारयेद्विटपमस्य महाप्रभावम् ।
यद्यत्पुरं समभिवाञ्छति गन्तुमद्धा
तत्तत्समाश्रयति स क्षणमात्रमेव ॥ १७ ॥
भूपालनन्दनमवोचदथो तृतीया
योगीश्वरी निजकराङ्गुलिदर्शनेन ।
पश्याग्रतो विकचभूरितरप्रसूनः
शाखी महामहिमवानिह मामकोऽयम् ॥ १८ ॥
अस्य त्वगेव नृपनन्दन यस्य चूर्णी-
कृत्वा शिरस्यमितरोषवशेन नूनम् ।

प्रक्षिप्यते सपदि गर्दभतां स गच्छे-
त्स्वेच्छावशेन निजकर्मकृते विधेयः ॥ १९ ॥
कारुण्यपुण्यवशतः खरजन्ममुक्तिं
वाञ्छेत तस्य यदि किं तु रुषं विहाय ।
भूयोऽपि मस्तकतले त्वचमेतदीयां
प्रेम्णा क्षिपेत्सपदि सोऽपि तथाविधः स्यात् ॥ २० ॥
श्रुत्वेति हृष्टहृदयः स परस्परं त-
द्वाक्यं यथाभिलषितं च वरं प्रलभ्य्वा ।
ताभ्यो ददौ स्ववसनाभरणानि सर्वं
यन्नीतमेव सहसा नरनाथसूनुः ॥ २१ ॥
आप्लावनिर्मलतरङ्गनितान्तजात-
कान्तिप्रभातुलितशारदचन्द्रशोभाः ।
आमुक्तदिव्यवसनाभरणाः स्त्रियस्ता-
स्तत्कालमेव सहसाथ तिरोबभूवुः ॥ २२ ॥
सोऽथ प्रहृष्टवदनो नरनाथसूनु-
रेकैकशः क्षितिरुहत्रितयात्तदानीम् ।
पर्णं त्वचं च विटपं च महाप्रभावं
तस्मादजिग्रहदनल्पकुतूहलेन ॥ २३ ॥
वस्तुत्रयं तदथ हस्तगतं विधाय
प्रोवाच वाचमिति राजसुतस्तदानीम् ।
तस्या इतस्त्वरितमेव हि वारवध्वाः
संप्राप्तधामनिकटोपवनो भवेयम् ॥ २४ ॥
इत्युक्त्वा विटपस्य तस्य सहसा माहात्म्यतः प्राप्तवा-
निच्छामात्रवशेन वारवनितावेश्मान्तिकस्थं तदा ।
उद्यानान्तरमेव राजतनयः प्रोलङ्घ्य रत्नाकरं
ध्यायंश्चेतसि तत्पराभवमसौ भूयिष्ठरोषाकुलः ॥ २५ ॥

इति देलरामाकथासारे योगिनीवरप्रसादेन सिन्धुद्वीपादुत्तीर्य राजपुत्रस्य गणिकाप-
वनागमनं नामैकादशः सर्गः ।

द्वादशः सर्गः ।

अत्रान्तरे नृपसुतापहृतस्ववस्तु-
श्रातप्रभावगरिमार्जितवित्तराशिः ।
नानाविधाहितमहोत्सवहृष्टचित्ता
सा वारयोषिदपि हर्म्यमथारुरोह ॥ १ ॥

आमुक्तभूषणवरांशुकभूषिताङ्गी
संत्रस्तबालमृगचञ्चललोचनश्रीः ।
वातायनोपरि रराज नितान्तमेषा
दिव्याङ्गनेव वरवारवधूस्तदानीम् ॥ २ ॥

शिञ्जानमञ्जुलसुरञ्जितचित्ररत्न-
मञ्जीरयुग्मललिताङ्घ्रियुगं रराज ।
तस्या विकोशमुखरालिभृतस्थलाम्बु-
जन्मानुकारि सरलाङ्गुलिपत्रहारि ॥ ३ ॥

करभाधिकोच्चमसृणं त्वधरं ललितोरुबिम्बयुगलं शुशुभे ।
मदनद्विपेन्द्रदशनद्वितयं मुनिचित्रशाखिपरिभञ्जनकृत् ॥ ४ ॥

नाभिर्वलित्रितयहारितरातिरम्या
तस्या बभौ विरचिता तदहं हि मन्ये ।
स्थित्यर्थमीश्वरभयान्मकरध्वजेन
सोपानलाञ्छितमनोरमदीर्घिकेव ॥ ५ ॥

तस्या उरोजद्वयमूर्ध्वगामि रराज सत्काञ्चनकुम्भकान्ति ।
पश्याव एतद्वदनं कदा वामित्थं हि सोत्कण्ठतयेव नुन्नम् ॥ ६ ॥

शिरोधरा चापि रराज तस्या भूष्याद्वितीयाखिलभूषणालम् ।
कंसारिहस्तस्थितकम्बुशोभां विडम्बयन्ती धवलोच्चकान्तिः ॥ ७ ॥

तस्याः पाणियुगं रराज रुचिरं रक्ताब्जशोभाधिकं
प्रान्तप्राज्यविराजमाननखरं स्पष्टाङ्गुलीलाञ्छितम् ।
मन्ये शंकरदग्धपञ्चविशिखामर्षेण चेतोभुव-
श्चक्रे तद्द्विगुणं स्वबाणदशकं यद्व्याजतो नूतनम् ॥ ८ ॥

दशनपङ्क्तिरलं शुशुभेऽमिता धवलकान्तिविडम्बितचन्द्रिका ।
प्रवरमौक्तिकराजिविराजिता स्मरवशंकरचूर्णसुसंनिभा ॥ ९ ॥

नात्युन्नतेन न च वामनताश्रितेन
नैवातिपीवरतरेण न कार्श्यभाजा ।
नातीव किं च विनतेन सुकान्तिनासा-
वंशेन चापि शुशुभे ललितार्जवेन ॥ १० ॥

नेत्रद्वयं तत्र रराज तस्या निरन्तरामन्दसुपक्ष्मशोभम् ।
तिरस्कृतैणेक्षणकान्ति दर्पं व्याकोशराजीव पलाशरम्यम् ॥ ११ ॥

शोभां भ्रूयुगलं बभार नितरां तस्या महाकान्तिभृ-
द्रम्यं काम्यतमं विजिह्ममनघं संदर्शनानन्दकृत् ।
जानेऽहं नु नवीचकार मदनश्चापद्वयं शंभुना
निर्दग्धाद्य निजैककार्मुकवशामर्षेण जैत्रं स्थिरम् ॥ १२ ॥

बभार शोभां नितरां ललाटपट्टं तदीयं विमलस्वकान्ति ।
शङ्के रुषा शंकरशीर्षपृष्ठादचूचुरच्चन्द्रकलामनङ्गः ॥ १३ ॥

सच्छोभालकराजिराजितमलं लावण्यकान्त्या करं
वक्त्रं चारुतरं तदीयमनघं सद्रूपगर्वावधि ।
शङ्के नानुचकार पार्वणसुधासूतिः कलङ्काश्रया
तत्पङ्केरुहसाम्यवर्णनविधौ किं चित्रमुच्चैर्भवेत् ॥ १४ ॥

उवाह शोभां च तदुत्तमाङ्गं नितान्तसीमन्तविराजमानम् ।
विनिर्जितालिव्रजबर्हिबर्हनितम्बबिम्बाश्रितकेशपाशम् ॥ १५ ॥

तत्केशपाशधवलस्तबकापदेशा-
च्चन्द्रो विवादमकरोदिति राहुणेव ।
मां चेद्ग्रसस्यशरणं किमिदं मदीय-
भ्रान्त्या रुणत्सि वदनं मदनोऽत्र रक्षी ॥ १६ ॥

चान्द्रीं त्विषं दशनशुभ्रमरीचिकान्त्या
लीलालसेन गमनेन च राजहंसीम् ।

कर्णान्तसर्पिनयनद्वितयेन बालां
संत्रासितां च हरिणीमपि सा जिगाय ॥ १७ ॥
नात्युन्नतं नैव तथातिह्रस्वं स्वमुष्टिमेयोदरराजमानम् ।
सरोरुहाकारमदोषगात्रं वपुश्च तस्याः शुशुभे नितान्तम् ॥ १८ ॥
विराजते सापि तदीयवाणी शनैः शनैर्मन्द्रतरोल्लसन्ती ।
वसन्तसंतुष्टपिकालिवीणानिक्वाणहृद्यातुलतुल्यशोभा ॥ १९ ॥
कण्ठे हारलतां महामणियुतां श्रोत्रद्वये कुण्डले
सौवर्णे भुजयोश्च रत्नवलयान्यङ्घ्रिद्वये नूपुरे ।
अन्यत्प्राज्यतमांशुकादिविविधाकल्पं वहन्ती बभौ
सा हर्म्ये गगनात्स्वशापवशतो विद्याधरीव च्युता ॥ २० ॥
तस्याः स्मितोद्गतमनोहरशुभ्रदन्त-
दीप्त्या रराज नितरां धवलः स सौधः ।
संपूर्णशीतकरमण्डलमध्यनिर्य-
ज्ज्योत्स्नाप्रभाप्रकरतो हि यथा हि मानी ॥ २१ ॥
एवं स्वकान्तिविभवादिसहर्षचित्ता
कर्णान्तगामिवरदृष्टिमितस्ततः सा ।
चिक्षेप यावदपि तावदिमं नरेन्द्र-
सूनुं ददर्श सरुषं निजनिष्कुटान्तः ॥ २२ ॥
तं वीक्ष्य जातगुरुसाध्वसविस्मया सा
विच्छायतामगमदाशु ततस्तदानीम् ।
चन्द्रत्विषेव नलिनी खलिनीव साधोः
संमानती रविरुचा च कुमुद्वतीव ॥ २३ ॥
कोपाकुलं तमवलोकयितुं तदानीं
भूपालनन्दनमसौ न शशाक भीत्या ।
वाराङ्गना सपदि विह्वलमानसालं
पञ्चाननं हि करिणीव निरस्तधैर्या ॥ २४ ॥

साचिन्तयद्ध्रुवमसौ गुणवान्महात्मा
कोऽपि प्रभूतमहिमा हिमरश्मिधामा।
प्रायो मया कपटतः परिवञ्चितोऽयं
तत्किं चिकीर्षति रुषाद्य न वेद्मि हन्त॥ २५॥

उल्लङ्घ्यवारिनिधिमेष मुहूर्तमात्रा-
त्प्राप्तोऽधुनैव हनुमानिव रंहसान्यः।
कुत्र व्रजामि तदितो निजहर्म्यपृष्ठा-
द्दृष्टा सरोषममुना च बताहमद्धा॥ २६॥

किं चाधुना मम विधिः शरणं भयेऽस्मि-
न्यत्तन्ममास्तु निजकर्म हि कः प्रमार्ष्टि।
एतत्समीपमपि सान्त्वयितुं व्रजामि
जानामि नापरमुपायमलं विचार्य॥ २७॥

ध्यात्वेति सा निकटमस्य तु मन्दमन्दं
गन्तुं स्वकीयपरिवारजनैरदृष्टा।
एकाकिनी विपुलसाध्वसकम्पमाना
वातायनादवततार ततस्तदानीम्॥ २८॥

यान्ती प्रभूतभयतस्तु शनैः शनैः सा
दूराद्ददर्श सरुषं नरनाथसूनुम्।
गत्वा ततस्त्रिचतुरेषु पदेषु भूमौ
विन्यस्य जानुयुगलं प्रणनाम चाग्रे॥ २९॥

सोऽप्यग्रतः सविनयां प्रणतोत्तमाङ्गां
प्रक्षिप्तजानुयुगलां गलदश्रुधाराम्।
उत्तुङ्गपीनकुचकुम्भनिवेशितस्व-
पाणिद्वयामतिभयामथ तामपश्यत्॥ ३०॥

कोपाकुलः स सहसा नरनाथसूनु-
रुत्थाय तां भुजयुगेन हठान्निरुध्य।

चूर्णीकृतामथ मुमोच तदीयशीर्षे
वृक्षत्वचं भव खरीति निगद्य वाचा ॥ ३१ ॥
तद्वाक्यमात्रवशतः सहसा तदानीं
वाराङ्गना विगतसर्वनिजस्वरूपा ।
सा गर्दभी समभवन्नरनाथसूनो-
स्तच्चेष्टितं मनसि रोषवशात्स्मरन्ती ॥ ३२ ॥
दन्तालिकामथ वितीर्य स राजपुत्रः
पीडामतीव जनयंल्लगुडप्रहारैः ।
ईर्ष्यावशेन सहसा स्वयमेव पृष्ठं
तस्या अशिश्रयदसूक्ष्मघृतप्रमोदः ॥ ३३ ॥
श्वभ्राद्रिकान्तारवनप्रदेशान्बभ्राम कान्तोऽधिकरूपहीनाम् ।
आरुह्य नित्यं स तु गर्दभीं तां भीतां प्रहारैः स्रवदश्रुधाराम् ॥ ३४ ॥
तदीर्ष्यया स्वात्मकृते समं सा वहन्नपूपाः स नरेन्द्रसूनुः ।
स्वल्पं ददौ वारि तृणं च तस्यै पृष्ठाद्दिनेनावततार जातु ॥ ३५ ॥
अत्रान्तरे तत्परिवारवेर्यो दिनेष्वनल्पेषु गतेषु तत्र ।
तां स्वामिनीं नैव कुतोऽप्यवापुर्गवेषितामप्यखिलाध्वयानैः ॥ ३६ ॥
लब्धुं ततस्तां परिवर्जिताशाश्चेट्यः समग्रा अपि कुट्टनीश्च ।
स्वमस्तकन्यस्तसमस्तहस्ताश्चक्रन्दुरुच्चैर्गलदश्रुधाराः ॥ ३७ ॥
जग्मुः समग्रा अपि राजधानीं तच्चेटिका बाष्पनिरुद्धवाचः ।
आस्थानसंस्थं ददृशुर्नरेन्द्रं निवेदिता द्वाःस्थगणेन सद्यः ॥ ३८ ॥
विन्यस्य जानुद्वयमग्रतस्ताः कृत्वाशिषं साश्रुदृशः सदुःखाः ।
चेट्यः समग्रा अपि कुट्टनी च व्यजिज्ञपन्भूमिपतिं प्रणम्य ॥ ३९ ॥
राजन्वती भूर्भवता नरेन्द्र प्रजापरित्राणकरस्त्वमेव ।
श्रीमान्सुरत्राणवरस्त्वमद्धा तद्दीनवाक्यं शृणु सावधानः ॥ ४० ॥
केनापि षिङ्गेन हृताद्य राजन्विलासिनी सा बत देलरामा ।
अन्वेषिताप्येव नितान्तयत्नात्कुतोऽपि नास्माभिरहो प्रलब्धा ॥ ४१ ॥

धुरंधरे त्वयि नाथ भूमिपुरंदरे पौरविचारदक्षे ।
विटादयश्चेत्प्रभवन्ति पापास्तत्कस्य गर्हा क्रियते परस्य ॥ ४२ ॥
श्रुत्वेति तद्वाक्यमसौ नरेन्द्रः ससंभ्रमं दीनतरं तदानीम् ।
आश्वासमाशां विरचय्य सद्यो व्यसर्जयच्चारगणांस्तु दिक्षु ॥ ४३ ॥
अन्विष्य ते चारगणा यदा न प्रापुः कुतश्चिन्नमतिप्रयत्नात् ।
तदा नरेन्द्रस्य भिया पलाय्य चाशिश्रयन्देशमथान्यमेव ॥ ४४ ॥

देशेऽस्मिन्बत जाल्मतस्करविटा वृद्धिं कियन्तो घना
जग्मुः केन नितान्तमेव दुरितासक्ता महानिष्कृपाः ।
यत्कश्चित्कमिता जहार गणिकां तां देलरामाभिधां
हाहाकारमिति प्रकाममुदभूत्प्रत्यालयं प्रत्यहम् ॥ ४५ ॥

इति देलरामाकथासारे तद्रूपवर्णनानन्तरमेतस्यास्तिरस्कारो नाम द्वादशः सर्गः ।

---

## त्रयोदशः सर्गः ।

याते तु काले विपुले कदाचित्कृशाकृतिं तां रुधिरार्द्रदेहाम् ।
खरीस्वरूपामुपरिस्थितक्ष्मापालात्मजप्रत्तघनप्रहाराम् ॥ १ ॥
सबाष्पनेत्रां बत देलरामां ददर्श मार्गे स्वसुतानुयाता ।
योगीश्वरी काचिदमन्दजातकुतूहला ज्ञानवती सुदूरात् ॥ २ ॥
(युगलकम्)
आलोक्य तां साह ततः स्वकन्यामेकं महत्कौतुकमग्रतस्त्वम् ।
पुत्रि द्रुतं पश्य न यावदेति दृग्गोचराद्दूरतरं प्रयाति ॥ ३ ॥
साप्यब्रवीत्तां जननीं न किंचित्पश्याम्यहो मातरहं विचार्य ।
प्रत्याह कन्यामथ योगिनी सा येयं खरी सैव हि देलरामा ॥ ४ ॥
आरुह्य यस्तिष्ठति पुत्रिपृष्ठे चास्याः प्रहारैर्जनयन्हि पीडाम् ।
स राजपुत्रो बहुशोऽनयायं विवञ्चितश्छद्म विधाय पूर्वम् ॥ ५ ॥
श्रुत्वेति संजातकुतूहला सा निर्बन्धतस्तां जननीमपृच्छत् ।
आमूलवृत्तान्तमशेषमेव व्यावर्णयामास तु योगिनी सा ॥ ६ ॥

कन्याथ सा तां जननीं ययाचे मातः खरीदेहविमुक्तिरस्याः ।
यथा भवेत्त्वं हि तथा कुरुष्व क्ष्मापालसूनोः प्रणयं विधाय ॥ ७ ॥
निर्बन्धतः सा निजकन्ययैवमभ्यर्थिता सादरगौरवेण ।
भूपालसूनोर्निकटं तदानीं योगीश्वरी तत्सहिता प्रतस्थे ॥ ८ ॥
तमाह दूरान्नरनाथसूनुं क्षणं प्रतीक्षस्व महाजन त्वम् ।
किंचिद्ब्रवीतुं मम विद्यतेऽद्य तवोपकण्ठे विपुलाभिलाषः ॥ ९ ॥
श्रुत्वेति भीत्याथ पुरःसरन्तीं दन्तालिकाकर्षणतो निरुध्य ।
तां गर्दभीं वर्त्मनि राजपुत्रो मुहूर्तमात्रं विनयेन तस्थौ ॥ १० ॥
अभ्येत्य सा तं कुशलादिवार्तां पृष्ट्वा नरेन्द्रात्मजमाचचक्षे ।
कथान्तरे सा स्वसुतासमक्षं योगीश्वरी पादतले प्रणम्य ॥ ११ ॥
योगीश्वरी तद्गुणहृष्टचित्ता सिद्धा प्रसक्ता तव चाहमद्धा ।
विमृष्य तस्मात्तव नैव कांचिद्गर्हां तु वेद्मि पृथुसद्गुणस्य ॥ १२ ॥
भवादृशां नैव तथापि वैरं महात्मनां दीनजनेऽतिपापे ।
चिरं प्रधर्तुं सुतयुक्तमद्धा कुलीनपुंसामपरो गुणः कः ॥ १३ ॥
मुञ्चाधुनैतां तु खरीस्वरूपां दुष्कर्मसक्तामिह **देलरामाम्** ।
कृत्वा विवाहं सुमते स्वकीयां कन्यामिमां तुभ्यमहं ददानि ॥ १४ ॥
यथेतरे पुत्रविरोधसक्ता भवद्विधा नैव तथाविधाः स्युः ।
यदिच्छसि त्वं तदसौ ददाति तुभ्यं यथा किं तु तथा करिष्ये ॥१५॥
प्रसीद तत्पुत्र दयां कुरुष्व गृहाण कीर्तिं श्रय साधुवादम् ।
पुण्यं च वृद्धिं नय(?) दार्यसेव्यं भज स्वमार्गे त्यज कोपमस्याम् ॥ १६ ॥
इयं सुता मे तव धर्मपत्नी यथा भवत्येवमुताधुनैव ।
तथा करिष्येऽधमवंशया तु किमेतया दुर्मतिवारवध्वा ॥ १७ ॥
तन्निशम्य नरनाथनन्दनस्तां जगाद वरयोगिनीं ततः ।
एतया गणिकयातिपापया यन्ममापकृतमेव वेत्सि तत् ॥ १८ ॥
यातना बहुविधा विधाय तद्धर्तुमेव गणिकामिमां ध्रुवम् ।
विद्यते मम मनोरथोऽम्बिके किं करोमि भवदीयशासनात् ॥ १९ ॥

यन्मदीयमहरज्जनन्यनल्पं हि वस्तुनिचयं सुदुर्लभम् ।
तद्ददातु सकलं तदुद्धतं स्वापतेयमपि चानुवासरम् ॥ २० ॥
प्रत्यहं च मम दास्यसेवनं चेत्करोति हि विलोक्य सांप्रतम् ।
लेखमम्ब रुचिरं भवत्समक्षं स्फुटाक्षरततिप्रशोभितम् ॥ २१ ॥
तत्करोमि भवदीयशासनान्मातरच हि तथाविधामिमाम् ।
रासभीजनिमथो निवार्य तूर्णं प्रभाववशतः पुरस्तव ॥ २२ ॥
वाचमेवमथ सा निशम्य तां व्याजहार नरनाथनन्दनम् ।
योगिनी प्रमुदिता विहस्य संकल्पमाशिषममन्दसिद्धिदम् ॥ २३ ॥
दुर्मतिं कुगणिकां करोषि चेद्रासभीजनिविवर्जितामिमाम् ।
यद्यदिच्छसि ददाति तद्धुतं साक्षिणी ह्यपरथा त्वहं सदा ॥ २४ ॥
योगिनीगिरमिमां निशम्य सच्छद्मशङ्कितमनोनिमित्ततः ।
त्रिर्मनोरथमवोचदात्मनः साक्षिणोऽप्यकृत तत्र पञ्चषान् ॥ २५ ॥
पादपत्वचमथो मुमोच तां प्राप यां प्रवरयोगिनीवरात् ।
मूर्ध्नि भूमिपतिनन्दनः स तस्यास्तदा सपदि वारयोषितः ॥ २६ ॥
तत्प्रभाववशतः क्षणेन सा गर्दभीसमुचिताकृतिं जहौ ।
प्राप साभरणचित्तहारिकाम्यात्मविग्रहमथो तथाविधम् ॥ २७ ॥
वारयोषिदथ सा तदोपसृत्य प्रणाममकरोत्प्रहर्षिता ।
भूमिपालतनयस्य तस्य विन्यस्य जानुयुगलं ससंभ्रमम् ॥ २८ ॥
सोऽपि मन्युवशतस्ततोऽभवत्तां विलोक्य पुरतः पराङ्मुखः ।
योगिनी किल तदिङ्गितं च तस्यै न्यवेदयदमर्षदर्शनात् ॥ २९ ॥
वारयोषिदपि योगिनीगिराङ्गीचकार विनयात्प्रणम्य सा ।
अञ्जसा सकलमेव राजपुत्रेप्सितं बहुविधं यथोदितम् ॥ ३० ॥
तद्दिने निजगृहं समानयद्योगिनी नृपतिनन्दनं ततः ।
वारयोषिदपि तस्य शासनाद्धीनता निजगृहं जगाम सा ॥ ३१ ॥
भूमिपालतनयाय तत्र तस्मै निजां दुहितरं समर्पयत् ।
पाणिपीडनमथो विधाय सा योगिनी प्रमुदिता यथाविधि ॥ ३२ ॥

साथ वाररमणी तदीयवस्तुव्रजं च तदुपार्जितं धनम् ।
अनिनाय नृपनन्दनान्तिकं दास्यलेखमिह योगिनीगृहे ॥ ३३ ॥
अत्रान्तरे तत्र पुरे हि **देलरामा**प्रवृत्तिं प्रथितामितीमाम् ।
प्रत्यालयं सर्वजनो निशम्य नरेन्द्रसूनुं प्रशशंस हर्षात् ॥ ३४ ॥
राजापि चाकर्ण्य जनश्रुतिं तां प्रभूतसंभूतकुतूहलेन ।
स्वराजधानीमनयद्विसृज्य भृत्यान्प्रियान्भूपसुतस्ततस्तम् ॥ ३५ ॥
ततः परिज्ञाय निजं कनिष्ठं सहोदरं भूमिपतिस्तदानीम् ।
आनन्दबाष्पाम्बुकणार्द्रनेत्रो गाढं समुत्थाय तमालिलिङ्ग ॥ ३६ ॥
तमग्रजं सोऽपि विभाव्य हर्षात्तज्जानुयुग्मं परिचुम्ब्य चैव ।
कृत्वा प्रणामं निकटोपविष्टो बाष्पाम्बुधाराकुलितो बभाषे ॥ ३७ ॥
यातो **मसेद्**न्तिकतः सुदूरं यदा पुरा मां प्रविहाय तूर्णम् ।
दिनावसानेऽपि तदा मया त्वं कुतोऽपि नान्विष्य चिरं हि लब्धः॥३८॥
श्रुत्वेति राजा निजगाद तत्र स्वभ्रातरं तत्त्रपया विनम्रः ।
ममेह संप्राप्तनरेन्द्रतस्य त्वं विस्मृतोऽपूर्णमतेस्तदानीम् ॥ ३९ ॥
श्रुत्वेत्यसौ तस्य शशंस **देलरामा**प्रवृत्तिं पुरतोऽग्रजस्य ।
स चाप्यवोचन्निखिलं स्वराज्यप्राप्त्यादिवृत्तान्तमशेषमेव ॥ ४० ॥
कथान्तरे तं निजगाद राजा **मो(मु)रादभक्षं(बख्शं)** स्वसहोदरं सः ।
इहत्यसर्वामितसेनया स्वं देशं व्रजावो वरमद्य जेतुम् ॥ ४१ ॥
यत्रैव हेतिं जनकश्चकार यत्रैव नो ज्ञातिजना वसन्ति ।
**हलाभ**देशं स्वमनोरथो मे प्रयातुमद्यैव हि विद्यते तम् ॥ ४२ ॥
श्रुत्वेति सोऽपि प्रशशंस हर्षा**न्मो(मु)रादभक्षो(बख्शो)**वचनं तदेव ।
आज्ञां ददौ सोऽथ पुरेऽत्र सेवाकृते नरेन्द्रः पृतनाधिपाय ॥ ४३ ॥
अल्पैर्दिनैः सर्वबलेऽपि सज्जीकृतेऽथ सेनापतिना नरेन्द्रः ।
विनिर्ययौ स्वं नगरं विजेतुं दत्त्वा परस्मै निजराज्यमत्र ॥ ४४ ॥
दासीपाणो(?)पार्जित**देलरामा**समन्वितस्तद्धनपूरितोष्ट्रः ।
योगीश्वरीपुत्रिकया च साकं तमन्वगच्छत्स निजानुजन्मा ॥ ४५ ॥

गच्छन्क्रमात्प्राप स भूमिपालः सहानुजो भूरिबलं पुरं तत्।
राजच्युतो यत्र स भारजीवी स जानिरेतज्जनको बभूव ॥ ४६ ॥
दीर्घाध्वखिन्नामितसिन्धुवारः स भूमिपालः स्वसहायवाक्यात्।
एकां त्रियामामथ तत्र तस्थौ सहानुजः खेदनिवारणार्थम् ॥ ४७ ॥
आकस्मिकोल्काविनिपाततुल्यं पितुर्जनेभ्यो मरणं निशम्य।
शुशोच राजा ससहोदरोऽलं तदीयनाम्नात्र चकार धर्मम् ॥ ४८ ॥
स्वमातरं चाहितसंगमां तां तेनैव साकं वणिजाश्रृणोत्सः।
निनिन्द तद्दुश्चरितं नितान्तं ददौ न तस्यै निजदर्शनं च ॥ ४९ ॥
प्रातस्ततः सद्गतिकुञ्जरेन्द्रमारुह्य राजा स्वपुरीं प्रतस्थे।
विराजमानोपरिहेमछत्रः सहानुजो भूरिबलानुयातः ॥ ५० ॥
क्रमेण गच्छन्स शनैः शनैः स्वभ्रात्रान्वितो वीरभटानुयातः।
समाससादाथ तमात्मदेशं नाम्ना हलाभं वरवस्तुलाभम् ॥ ५१ ॥
आमुक्तवर्मा निशितातुखड्गः सज्जीकृतायोधनदक्षवीरः।
भ्रात्रा समं तन्नगरं हठात्स द्वाःस्थान्निहत्य द्रुतमाविवेश ॥ ५२ ॥
योद्धुं विनिर्यातविपक्षवृन्दं निहत्य संख्ये भटपत्यसंख्ये।
पितुः स्वकीयस्य सहानुजन्मा विवेश राजा निजराजधानीम् ॥ ५३ ॥
तत्रानुयातान्सुभटान्यथेच्छं दानेन मानेन च तोषयित्वा।
समुत्सुकांस्तान्प्रति स स्वदेशं व्यसर्जयद्भूमिपतिस्ततः सः ॥ ५४ ॥
प्राज्यं स राज्यं स्वयमेव तस्मिन्हलाभदेशेऽखिलमन्त्रिवाचा।
जग्राह तस्मै च निजानुजाय ददौ क्रमोपागतयौवराज्यम् ॥ ५५ ॥
इब्राहीमनराधिपो निजपितुः संप्राप्य सिंहासनं
हत्वा वैरिगणान्रराज नितरां सिंहानुकारी तदा।
दासीभावयथेष्टकर्मनिरतां तां देलरामां पुनः
पश्यन्सोऽपि बभूव तत्र नगरे मो(मु)रादभक्षः(बख्शः) सुखी ५६

इति देलरामाकथासारे स्वदेशराज्यप्राप्तिर्नाम त्रयोदशः सर्गः।

समाप्तोऽयं ग्रन्थः।